अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला–१०२

# मधुराद्वैतसिद्धिः

(श्रीगुलाबरावमहाराजकृत–प्रेमनिकुञ्जाधारिता)

प्रा. मधुसूदनः पेन्ना

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः



राष्ट्रहिताय संस्कृतम्

कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
तथा
न्यू भारतीय बुक कॉर्पोरेशन, नव देहली
2020

अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला – १०२

# मधुराद्वैतसिद्धिः

(श्रीगुलाबरावमहाराजकृत–प्रेमनिकुंजाधारिता)

प्रा. मधुसूदनः पेन्ना

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः



कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)

शीर्षकम् — मधुराद्वैतसिद्धिः

लेखक — प्रा. मधुसूदनः पेन्ना

प्रधानसंपादकः — आचार्यः श्रीनिवासः वरखेडी
कुलगुरु, क.का.सं.वि., रामटेकम्

संपादकः — आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः
क.का.सं.वि., रामटेकम्

संपादकमण्डलम् — डॉ. दिनकर मराठे, क.का.सं.वि., रामटेक
डॉ. वीना गाणु, नागपुर.

प्रकाशनवर्षम् — २०२०

आवृत्तिः — प्रथमा

मूल्यम् — रू. २७०/–

आय.एस.बी.एन. — ९७८–८१–८३१५–४४७–५

मुखपृष्ठम् — श्री. उमेश पाटील, क.का.सं.वि., रामटेकम्

प्रकाशकः — कुलसचिवः,
कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः,
प्रशासकीयभवनम्, मौदामार्गस्य, रामटेकम्.

एवं

न्यू भारतीय बुक कॉरपोरेशन
२०८, द्वितीय तल, प्रकाशदीप बिल्डिंग,
४७३५/२२, अंसारी रोड, दरिया गंज,
नई दिल्ली – ११०००२
फोन नं. : २३२८०२१४, २३२८०२०९



एस. के. आफॉसेट, दिल्ली

## PREFACE

It is indeed a matter of great pleasure and pride for Kavikulaguru Kalidas Sanskrit University, Ramtek to have this rarest opportunity of hosting the 50th session of All India Oriental Conference at Nagpur. This AIOC-50th session at Nagpur will be forever remembered by all as the year 2019 also happens to be the year of Centenary Celebration of AIOC. The premier objective with which the great scholars of yester years had contemplated and established this national academic event called All India Oriental Conference has been achieved through these years with scores of young scholars contributing significantly to the treasure house of knowledge through their valuable research work.

The research of yore and of the present should be properly recorded so as to make it easily available to all lovers of knowledge and wisdom in the years to come. With this objective, we have contemplated to commemorate the 100th year of this grand event of 50th session of AIOC by way of publishing 100 monographs on different subjects in four languages viz., Sanskrit, Hindi, Marathi and English. It is no doubt a herculean task but still worth of it, for the reason that these 100 monographs will inspire many young scholars to take upon a fresh study and research of the oriental subjects with more vigour and zeal.

The AIOC Centenary Publication Series includes wide variety of subjects like Literature, Language, Veda, Indian Philosophy, Sanskrit Grammar, Law, Children Literature, Yoga, Astronomy and Astrology, Ayurveda, Pali, Prakrit, Jain, Buddhism, Education, Library Science, Poetics, Aesthetics, and Indology. It also includes reprint of some rare texts of academic importance which have gone out of print are not easily available. We wish to mark this centenary celebrations with this series that connects the glory of the past and aspirations of future. I place on record my sincere gratitude to all the authors of these monographs who have kindly contributed to the richness of this

series.

I am confident that the books published in these series will definitely inspire the lovers of Oriental Learning in general and of Sanskrit Language and Literature in particular.

On this occasion, we have published a memorable book of all the speeches of Section-Presidents of all previous sessions of AIOC. It is indeed a very capacious addition to any collection. I with all respect thank two eminent scholars of our times - Prof. Gautam Patel, President and Prof. Saroja Bhate, General Secretary, the torch bearers of AIOC who have not only encouraged us in this venture but also made all efforts to provide these valuable historical speeches for us. I thank all executive members of AIOC and my colleagues of the varsity for making this event a grand success.

My words fall short in describing the painstaking efforts and scholarly commitment of my esteemed colleague Prof. Madhusudan Penna, local secretary of this session in bringing out this series.

I also take this opportunity to profusely thank Shri. Subhash Jain and Shri Dipak Jain, the proprietors of New Bharatiya Book Corporation, New Delhi for their enthusiastic approach and timely work with all precision and grace.

Let us all sanctify ourselves in the eternal flow of wisdom by reading these books and recommending these to others also!

सरस्वती श्रुतिमहती महीयताम्

Ramtek
10th January 2020

Prof. Shrinivasa Varakhedi
Vice Chancellor, KKSU

**Kavikulaguru Kalidas Sanskrit University**
**All India Oriental Conference**

**100th Year 50th Session**
**10th-12th January, 2020**

**Chief Patron**
Hon'ble Nitin Gadkari
Minister of Road, Transport & Highways of India

**Patron**
Prof. Shrinivasa Varakhedi
Vice Chancellor, KKSU, Ramtek

**AIOC President**
Prof. Gautam Patel
Chairman, Sanskrit Seva Samiti, Ahmedabad.

**AIOC General Secretary**
Prof. Saroja Bhate
Professor of Sanskrit (Retd.), Pune University, Pune

**AIOC Local Secretary**
Prof. Penna Madhusudan
Dean, KKSU, Ramtek

**Additional Local Secretary**
Dr. Harekrishna Agasti
Dr. Dinakar Marathe
Dr. Kalapini Agasti
Dr. Parag Joshi

**Organising Committee**
Prof. C.G. Vijayakumar, Registrar (I/c) & Dean, KKSU, Ramtek
Prof. Nanda Puri, Dean, KKSU, Ramtek
Prof. Krishnakumar Pandey, Dean, KKSU, Ramtek
Prof. Laita Chandratre, Dean, KKSU, Ramtek
Dr. Ramachandra Joshi, Finance Officer, KKSU, Ramtek
Dr. Umesh Shivahare, Controller of Examination, KKSU, Ramtek
Dr. Dipak Kapade, Librarian, KKSU, Ramtek
Dr. Renuka Bokare, PRO, KKSU, Ramtek
Shri. Rajivranjan Mishra, Technical Head, KKSU, Ramtek
Shri. Pravin Kalambe, Security Officer, KKSU, Ramtek

## Reception Committee

Prof. Shrinivasa Varakhedi, Chairperson Reception Committee & VC, KKSU
Parampujya Govindagiri Swamiji, Rishikesh
Prof. P.T. Chande, Former VC, KKSU
Prof. Uma Vaidya, Former VC, KKSU
Prof. Vijendra Kumar, VC, National Law University, Nagpur
Prof. Rajnish Shukla, VC, National Hindi University, Wardha
Prof. Vinayak Kane, VC, RTM Nagpur University, Nagpur
Shri. Krupal Tumane, Member of Parliament
Shri. Girishji Vyas, Member of Legislative Council
Shri. Chandrashekhar Bawankule, Guardian Minister, Nagpur
Prof. Vishram Jamdar, Director, VNIT, Nagpur
Dr. Bhushankumar Upadhyay, Commissioner of Police, Nagpur
Shri. Vijay Phanshikar, Editor, The Hitavada, Nagpur
Shri. Rajkumar Tirpude, Tirpude Group of Insitutions, Nagpur
Shri. Mohabbat Singh, Tuli International, Nagpur.
Shri. Chandragupta Varnekar, Principal Retd., Nagpur
Shri. Suresh Sharma, Baidyanath, Nagpur
Shri. Prabhakar Rao Mundle, Dharampeth Educational Institutions, Nagpur

## Executive Committee

Prof. G. U. Thite,
Vice President

Dr. Brijeshkumar Shukla,
Treasurer

## Members

Dr. Rajni Satish Chandra Jha
Prof. Shukla Ramakant
Dr. Behera Ranjit
Dr. Meena Shukla
Dr. Nirmala Kulkarni
Dr. Roy Gauri Nath
Dr. Tripathi Uma Rani
Dr. Pushpa Jha
Dr. Basu Ratna
Dr. Mithilesh Kumar
Prof. Singh Prasoon Dutta
Shri. Mishra Arun Ranjan
Dr. Mishra Baidyanath
Dr. Tripathi Rajendra Rasraj
Shri. Harshdev Madhav
Dr. Kamdev Jha
Dr. Parinita Deshpande
Dr. Jha Udayanath (Ashok)

श्रीप्रेन्नामधुसूदनकृता

# मधुराद्वैतसिद्धिः

## (श्रीगुलाबरावमहाराजकृत – प्रेमनिकुञ्जाधारिता)

## àW_ àH$aU_

**पूर्णोऽपीक्षणमात्रतश्च सकलं निर्माय लीलाजगत्**
**सच्चिद्रूपमथो विभर्ति नियतं जीवात्मना संविशन्।**
**यः स्वानन्दघनोऽव्ययः सकलविन्निःसीमसौन्दर्यवान्**
**तं वन्दे परभक्तिमात्रविवशं कृष्णाख्यनारायणम्।।1।।**

**अनध्यस्तविवर्तात्मा स नः पायात् प्रभुर्हरिः।**
**यो लीलाविग्रहं श्रित्वा भक्तानवति सर्वदा।।2।।**
**विषयान् प्रति वैराग्यान्निर्गुणं याति यन्मनः।**
**श्रान्तं तत् सगुणं प्राप्य भक्तितो मोक्षमृच्छति।।3।।**

***मधुराद्वैतवेदान्तसंप्रदायप्रवर्तिने।***
***गुलाबराववर्याय प्रणिपातःसदास्तु मे।।***

अथ भगवतो निःसीमसौन्दर्यसाक्षात्कारपरवशचित्तो भक्तः परित्यक्तदितरलालसस्तदीयत्वे परब्रह्मनन्दमहार्णवे संप्लुतो नारद-शुकादय इव सर्वदा तन्मात्रो भवति। असीमसौन्दर्यगरिमौव तद् ब्रह्म स्वयमभिव्यक्तं भवति यदा तदा तत्सौन्दर्यवशीकृतचेतसो हि मुनयो गायन्ति भक्त्या तदीयसौन्दर्यमहिमानम्। यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति श्रुत्यैव यत्सौन्दर्यवर्णने विफलयैव निगदितं किं तत् सौन्दर्यं नामेति विचार्यते।

## सौन्दर्यमीमांसा

सौन्दर्यं सृष्टिस्वभावं मन्यन्ते स्थूलवादिनः केचन। स्वोपयोगि स्वार्थसंपादकं वा तदिति तेषु केचित्। सृष्टिस्वभावप्रतीकं तदित्यपरे। मनोमयाभासमात्रमिति केचित्। एवं सतीषु विप्रतिपत्तिषु तत्तन्मतगतदोषोद्भावपूर्वकं सौन्दर्यस्वरूपप्रकारा निरूप्यन्तेऽत्र।

सौन्दर्यस्य सृष्टिस्वभावत्वं न युक्तिसहम्। तथात्वे सति, एकस्यैव पदार्थस्य क्वचिद् द्वेष्यता क्वचित् प्रियता च न स्याताम्। तथाहि प्रियो ह्यग्निः शीतकाले, न तूष्णकाले। उष्काले स द्वेष्यो भवति। पर्वतगतः स एव दूरतो वीक्ष्यमाण उपेक्ष्योऽपि भवति। एकैव योषित् पत्यै सुखदायिनी सपत्न्यै दुःखदायिनी विरक्तं प्रति च उपेक्षास्थानम्। यथा वा सुवर्णं लब्धुः प्राप्तिकाले सुखदमपि चोरभयात् दुःखदमपि भवति। एवं बहुभिरुदाहरणैर्ज्ञातुं शक्तये यत् सौंन्दर्यं सृष्टिस्वभावो भवितुं नार्हति इति।

स्वोपयोगि स्वार्थसंपादकं वा सौन्दर्यमिति लक्षणमपि न समीचीनम्। तथा चेत् स्वार्थरहितस्य कस्यचिद्विरक्तस्य भूतदयावर्णनतो न सौन्दर्यानुभवो भवेत्। परन्तु काव्येषु क्वचिद् विरक्तानां भूतदयादिकस्य वर्णनेन सौन्दर्यमाविर्भावयन्ति कालिदासाश्वघोषादिमहाकवयः।

सृष्टिस्वभावप्रतीकं सौन्दर्यमिति मतमपि न साधु। यतः यत् सौन्दर्यं मूलपदार्थे न भवति तत् कथङ्कारं वा प्रतीके आविर्भवेत्। ननु व्याघ्रदर्शने भयेऽपि व्याघ्रचित्रदर्शने प्रीतिदर्शनात् प्रतीके एव आनन्द इतिचेत् तन्न। चित्रकारगतकौशलाश्रितैव तत्र प्रीतिर्न तु केवल प्रतीकाश्रिता व्यभिचारात्।

मनोमयाभासमात्रमेव सौन्दर्यमिति मतमपि न चतुरस्रम्। आभासे अवर्तमाना मूलद्रव्यगतगुणा यदा प्रतीयन्ते तदा ते मनोमात्रा एवेति स्वीकर्तव्यम्। तथाचेत् तान् प्रति वासनावृद्धिर्भवेत् वासनावृद्धौ मनश्चञ्चलं भवेत् चञ्चलं च मनश्चिन्तायुक्तं भवेत् चिन्तायुक्ते च मनसि कथं वा प्रीतिरुदियात्। असमाहिते चेतसि सौन्दर्याभाने आनन्दो







वा कथं भवेत्। असमाधाने तु चेतसः पदार्थानां तिरस्क्रियैव खलु भवति।

इत्येवं सौन्दर्यस्वरूपपरासु विप्रतिपत्तिषु परीक्षितासु तासाम-पूर्णत्वमेव प्रतीयते। अथ स्वमते सौन्दर्यं किमित्युक्ते-

**यत्रैकाग्रं मनो भूत्वा यतो हि सुखमश्नुते।**
**सौन्दर्यं तत्र तस्य स्यादिति सौन्दर्यलक्षणम्।।1।।**

मनः यस्मिन् वस्तुनि एकाग्रं भूत्वा यस्माद् विषयात् सुखमश्नुते तत्र तस्यैव विषयस्य सौन्दर्यमिति सौन्दर्यलक्षणं बोध्यम्।

गौणमुख्यभेदेन तद् द्विधा। यावत्कालभासमानं गौणं सदातनञ्च मुख्यमिति। यथा मुहुर्मुहुः सेव्यमानो रुचिकरोऽप्याहारो न कालान्तरे रुचिमान् भवति। यथा सुगन्धि पुष्पमपि मुहुराघ्रातं न प्रीतिं जनयति यथा वा प्रियपुत्रोऽपि गतासुर्गृहस्थो न प्रीतिज्जनयति तथा गौणं सौन्दर्यं कादाचित्कप्रीतिजनकं भवतीति वेद्यम्।

चिदानन्दाभिव्यक्तितः प्रतीयमानं सौन्दर्यं नित्यम्। तदेव मुख्यम्। स्वमातरि अपारप्रेमविशेषवतः पुत्रस्य तद्दर्शने बहुतिथे कृतेऽपि न प्रीतिहानिर्भवति। अथवा पतिव्रतायाः पतिदर्शने तत्समागमे वा नित्यं प्रीतिरेव भवति। अथवा योग्यगुरुं प्रति योग्यस्य शिष्यस्य सर्वदैव भवति प्रीत्यतिशयः तथा चिदभिव्यक्तिमात्रमाश्रित्य भवति सौन्दर्यस्य वैचित्र्यम्।

**सच्चिदानन्दरूपं यद् ब्रह्म यतिमनोगतम्।**
**तस्याभिव्यक्तिरत्यन्तं सौन्दर्यमिति बुध्यताम्।।2।।**

सच्चिदानन्दस्वरूपस्य ब्रह्मणः अभिव्यक्तिरेव सौन्दर्यमिति रहस्यम्। तत्र ब्रह्मणः सत्स्वरूपाभिव्यक्तिर्द्रव्यमित्युच्यते। तस्यैव चित्स्वरूपाभिव्यक्तिः शक्तिस्वभावदिगुण इत्युच्यते। तद्ब्रह्मणः आनन्दस्वरूपाभिव्यक्तिश्च मूलतः सौन्दर्यमित्युच्यते। एवं सच्चिदा-नन्दब्रह्मणस्तत्तद्रूपेण सौन्दर्याविर्भावो भवति।

**अस्ति-भाति-प्रियं-नाम-रूपञ्चेत्यंशपञ्चके।**
**आद्यं त्रयं ब्रह्मरूपं शिष्टञ्च प्रकृतिस्तथा।।3।।**

अस्ति-भाति-प्रियं-नाम-रूपम् च इति अंशपञ्चके अस्त्यादित्रय-माद्यं ब्रह्मणो रूपम्। अवशिष्टं नाम-रूपञ्चेति प्रकृतिरेवेति। तदेव जगदित्युच्यते। प्रकृतिरिरिति सत्त्व-रजस्तमोगुणानां साम्यावस्था। प्रकृतिमेतामवष्टभ्य ब्रह्म स्वयमेव नाना भवतीति वेदान्तसंप्रदायः। नानेव भासत इति केचित्। प्रकृतेः सत्त्वगुणेन ज्ञानं लाघवञ्च भवति। रजोगुणात् क्रिया स्थितिश्च भवति। तमोगुणाच्च आवरणं तमश्च भवति। तत्र-

**प्रकृतेः सत्त्वमाश्रित्य यदैकाग्रं मनो भवेत्।**
**प्रियत्वं ब्रह्मणो व्यक्तं सौन्दर्यमिति वेद्यते।।4।।**

पूज्येषु विषयेषु सा ब्रह्मणोऽभिव्यक्तिरधिका भवति। मातृपितृ-पत्यादिषु च अधिकतरा भवति। तर्हि किं वक्तव्यं जगन्नायके स्वयमभिव्यक्ते सा कीदृशी भवतीति।

## भगवद्विग्रहमीमांसा

**अनध्यस्तविवर्तात्मा सौन्दर्यातिशयो हरिः।**
**तदङ्घ्रिपद्ममाश्रित्य रमतां मानसं मम।।5।।**

ननु भावनासौन्दर्यवादे हि अन्तःकरणस्य भावनयैव सौन्दर्याभि-व्यक्तिस्वीकारे दृष्टिसृष्टिमतप्रवेशो भवति। तथाचेत् दृष्टिसमकालीना सृष्टिरिति हेतोः सौन्दर्यमपि प्रातिभासिकं भूत्वा भगवद्रूपमपि प्रातिभासिकमेव भवति इति चेन्न -

**मायोपाधिकमेवात्र प्रातिभासिकमिष्यते।**
**तत् सर्वं ज्ञाननाश्यं स्यादिति वेदान्तसंमतम्।।6।।**

अन्तःकरणभावनाजन्यं सर्वमपि सौन्दर्यं प्रातिभासिकं भवतु नाम प्रातिभासिकत्वे च ज्ञाननाश्यमपि नः स्वीकार्यम्। यत् यत् प्रातिभासिकं तत् तत् ज्ञाननाश्यामिति वेदान्तिनां मतमपि समञ्जसम्। परन्तु-





**भगवद् विग्रहो नैव ज्ञाननाश्योऽस्ति तेन हि।**
**अनध्यस्तविवर्ताख्यः स्वीकृतोऽस्ति मया हरिः।।7।।**

अविद्योपाधौ ब्रह्मणः प्रतिबिम्बो हि जीवः। तद् ब्रह्म वासुदेवाख्यं शुद्धमात्मरूपमपि आनन्दाभिव्यक्तिः सशरीरं पृथगिव भासते। तस्य शरीरत्वस्य विवर्तत्वेऽपि ज्ञानाश्यत्वाभावात् अनध्यस्तमेव स्वीकार्यम्। ब्रह्मज्ञानानन्तरमपि भगवद्विग्रहस्य अनिवर्त्यत्वात्। निवर्त्यत्वे च तस्यापि प्रातिभासिकत्वप्रसङ्गात्। स च भगवद्विग्रहः शुद्धब्रह्मणोऽन्य इव भासमानोऽप्यभिन्न एव। तुच्छत्वाभावादसन्न हि। परस्परविरोधात् सदसद्रूपोऽपि न। सदसद्रूपाभ्यामनिर्वचनीय एव स्वीक्रियतामित्युक्ते तदपि न संमतं यतः सर्वमपि अनिर्वचनीयं मायाकार्यं भवति। सर्वमपि मायाकार्यं ज्ञाननाश्यं भवति। भगवतो विग्रहस्याप्यनिर्वचनीयत्वे मायाकार्यत्वं, मायाकार्यत्वे ज्ञाननाश्चत्वञ्च प्रसज्येत। परन्तु तस्य ज्ञाननाश्यत्वाभावात् सर्वब्रह्मवित्संमतात् अनिर्वचनीयत्वमपि नैवेति भावः।

**अतुच्छत्वादसन् नैव नानिर्वाच्योऽपि विग्रहः।**
**सदसतोर्विरोधात् स नोभयरूप इष्यते।।8।।**

जीवकृतकर्मवशत ईश्वरस्य देहधारणमित्युच्यते चेत् तर्हि जीवस्याज्ञानेनापि स किमज्ञानी भवेत्? अनित्यज्ञानवतां जीवानां ज्ञानेन पुनर्जन्म न शक्यं चेत् नित्यज्ञानवत ईश्वरस्य ज्ञानेन तस्य कथमवतारो भवेत्? अथ दययैव जीवसमुद्दिधीर्षया ईश्वरो देहं धारयतीति चेत् दयाधिष्ठानमन्तःकरणमावश्यकं भूत्वा तदन्तः करणं प्रकृतेर्भूतानां वा कार्यं भवेदिति प्रसज्येत। अन्तःकरणस्य प्रकृतिकार्यत्वे कार्योपाधिरयं जीव इत्युक्तरीत्या ईश्वरस्यापि कार्योपाधित्वात् जीवत्वं भवेत्। कार्योपहितोऽपीश्वरो ब्रह्मविदेवेति चेदुच्यते तर्हि मुक्तावतारयोः को भेदः? इत्यादि विमृश्य उच्यते-

**मुक्तावतारयोर्भेदः शास्त्रेषु विशदीकृतः।**
**इत्यतो नैव मुक्तात्मा सेशो भवितुमर्हति।।१।।**

''यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्च इति श्रुतेः,'' ''इमं विवस्वते योगं प्रोक्तवाहमव्ययम्'' इत्यादिजाग्रच्छ्रुतेः, ''अनेनैव देहेनेति तद्टीकोक्तेः, ''आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिरित्यादिभागवतोक्तेः, ''विवक्षितगुणोपपत्तेश्चे''ति सूत्रसंमतेः, ''मुक्ता अपि लीलया विग्रहं कृत्वा भजन्त'' इतिप्रामाणिकोक्तेः तदितराभ्यः सत्पुरुषोक्तिभ्यः मुक्तस्य अवतारस्य च मध्ये भेदो बुध्यते। शरीरग्रहणादि-अशक्यं कर्म कर्तुं समर्थश्चेदीश्वरः, सः स्वनाशमपि कर्तुं समर्थो भवेदिति न वाच्यम् तदेव कर्म कर्तुं शक्यं यदालोकितं स्यात्। न कोऽपि स्वनाशमालो कितुं प्रभवेदिति कारणेन ईश्वरस्य स्वनाशकरणप्रसंगोऽपि दुर्घटः।

अथ भगवद्विग्रहस्य परप्रारब्धजन्यत्वे का क्षतिरिति चेत् तत्रोच्यते जगति अर्धसमभोग्या अत्यन्तभोग्या इति पदार्था द्विविधा दृश्यन्ते। तत्र भोग्यरूपता भोक्तृरूपता च यत्र समं भवतः ते पदार्था अर्धसमभोग्या। तथा हि जीवानां सचेतनानां वा अर्धसमभोग्यता, अचेतनानाञ्च अत्यन्तभोग्यरूपता। तेष्वपि अर्धसमभोग्याः पदार्था परप्रारब्धजन्या अत्यन्तभोग्यरूपाश्च भोक्तृमात्रप्रारब्धजन्या इति प्रतीयन्ते। पत्युः प्रारब्धेन पत्नी यथा निर्मिता तस्याश्च प्रारब्धेन तथा पतिर्निर्मितः। परमेश्वरस्य तु स्वप्रारब्धस्यैव अभावात् अर्धसमभोग्यत्वाभावे ज्ञाते परप्रारब्धजन्यत्वं प्रसज्येत, परम् अत्यन्तभोग्यरूपपदार्थानामचेतनत्वात्, ईश्वरस्य तु चेतनत्वात् तस्य परप्रारब्धजन्यत्वमपि नेति बोध्यम्। पाषाणाद्यचितनेष्वपि चैतन्यस्य शास्त्रेषु बोधितत्वात् कथं तेषामचेतनत्वमिति चेदुच्यते, वेदान्तशास्त्रे हि विषयेऽस्मिन् मतद्वयं विद्यते यथा पाषाणाद्यचेतनेषु अन्तःकरणाभावात् चिदाभासोऽपि न भवति। साक्षिचैतन्यस्य पाषाणाद्याश्रयत्वेऽपि तत्र भोगो नास्ति यतः





स भोक्ता चिदाभास इति चित्रदीपप्रकरणे विद्यारण्याः। अपरमतानुसारं पाषाणाद्यचेतनानामपि जीवत्वे संकोचवशात् दुःखस्यैव भोगोऽभ्युपेयते।

पाषाणादिकं स्वयमचेतनमिति परप्रारब्धजन्यं भवितुमर्हति। ईश्वरो न तथाऽचेतनस्तेन न परप्रारब्धजन्यः। तथैवापरमतानुसारं परप्रारब्धजन्यत्वस्वीकारे ईश्वरे जडत्वं दुःखभोगश्च प्रसज्येयाताम्।

ननु परमेश्वरस्य आप्तकामत्वात् दुःखस्पर्शोऽपि न संमतः तर्हि दुःख भोगस्य कुत्रावकाश इति चेत् तर्हि भगवच्छरीरे चेतनाविर्भावस्यैवाभावात् जडमत्यन्तभोग्यरूपमेव परमेश्वरशरीरमिति प्रसज्येत तन्न योग्यम्।

स्वशरीरे परमेश्वरो भक्तोद्दिधीर्षयैव दयया प्रविशतीति चेत्। कीदृशोऽयं प्रवेशः? स्वयंप्रवेशोऽथवाऽनुप्रवेशः? परमेश्वरस्य स्वयंप्रवेशः तावत् सिद्धःतस्य अन्तर्यामित्वात्। अनुप्रवेशस्तु जीवेनाऽत्मना भवतीति श्रुतेः, परमेश्वरस्य अनुप्रवेशस्वीकारे तस्य जीवत्वं प्रसज्येत। अथवा परमेश्वरो दययैव शरीरं धारयति न तु परप्रारब्धत इति स्वीक्रियताम्।

ननु ''संकल्पादेवास्य पितरः समुत्तिष्ठन्ती''ति श्रुतेः उपासको हि ब्रह्मलोकप्राप्त्यनन्तरं सर्वचेतनाचेतनपदार्थं निर्मिमीत इति ज्ञायते। स्वप्नेऽपि तथाऽनुभवोऽस्ति। अतः भगवच्छरीरमपि परप्रारब्धजन्य मथवा भक्तेच्छजन्यं कथं न भवेत् इति।

उच्यते - ब्रह्मलोके हि मुक्तःपुरुषः कतिपयजीवान् भोग्यान् कृत्वा अर्धसमभोग्यपदार्थान् निर्मिमीत इति प्रौढिवादमाश्रित्य वक्तुं शक्यम्। तथाऽपि शास्त्रानुसारमिदमुत्तरं भवति - ब्रह्मलोके मुक्तः पुरुषो यान् यान् सचेतनपदार्थान् भोग्यरूपेण निर्मिमीते तेषे सर्वेषु स्वयंप्रविश्य स्वमेवैश्वर्यमुपभुङ्क्ते परं तस्य जगद्व्यापारो न भवतीति तदाशयः। तथैव स्वप्नाभासा इतरजीवाः मुख्यजीवस्यैव आभासा इति व्यवस्था।

ननु जीवाभासदृष्ट्या स्वप्नानुभवस्य स्वीकारेऽपि यथा स्वप्ने पुरुषः अन्यजीवाभासैः सह सचेतनशरीरमपि निर्माति तथा भगवच्छरीरमपि निर्मातीत्यत्र को दोषः इत्युक्ते, उच्यते -

स्वप्नाध्यासस्य जीवचैतन्यमधिष्ठानमित्येकः पक्षः। ब्रह्मैवाधिष्ठानमिति चापरः पक्ष इति वेदान्तशास्त्रे पक्षद्वयं विद्यते। प्रथमपक्षे स्वाप्नजीवाः स्वप्ननिर्मातृजीवाभासाः द्वितीयपक्षे च ब्रह्माभासाः यथाच स्वप्नानुभवः प्रतीतिमात्रः तथा स्वाप्नाः अनुमानादिप्रमाणप्रमेयव्यवस्थाः। अथ स्वाप्नजीवानां स्वकर्मजो वा भोगः स्वप्ननिर्मातृकर्मजो वा? इत्युक्ते उच्यते - इष्टापत्तेः। द्वितीयपक्षे तु प्रतिवादिन एवानिष्टम्। अपि च मुक्तपुरुषाणां संकल्पनिर्मितशरीरेषु प्रवेशं बोधयत् शास्त्रं विद्यते तथा स्वप्रारब्धनिर्मितावतारशरीरेषु प्रारब्धनिष्ठस्य पुरुषस्य प्रवेश बोधयत् शास्त्रं नास्ति। अतो भगवच्छरीरं परप्रारब्धजन्यं नास्ति इति सिद्धम्।

''सर्वत्र प्रसिद्धोपदेशात्'', ''विवक्षतिगुणोपपत्तेश्च'', ''अनुपपत्तेस्तु न शारीर'' इत्यादिभिरुपपत्तिभिः शारीरकसूत्रेषु जीवोपासना प्रतिषिद्धा। सत्यसंकल्पादिगुणविशिष्टपरमेश्वरस्य उपासना तु शास्त्रविहिता। तथा अवतारस्याप्युपासना तापनीयादि श्रुतिषु, भागवतादिपुराणेषु च सर्वत्र प्रदर्शिता। अतो हि अवतारा न जीवाः, न वाऽवतारशरीरं पुरःसरं सिद्धम्। अतो न भूतकार्यमपि तत्।



**परमेशशरीरं न मायाकार्यं भवेत् तथा।**
**वेदान्तेष्वप्रसिद्धत्वादित्यत्राथ विचार्यते।।10।।**

अप्रसिद्धिविवेचनप्रसंगे वेदान्तस्य एकादशपक्षा अपि सुविचार्यन्ते। येषु च वेदान्तसंप्रदायेषु परमेशशरीरस्य न मायाकार्यता। ते हि पक्षा अस्माकमनुकूला एव। मायाकार्यतां ब्रुवाणा एव पक्षा अत्र परीक्ष्यन्ते।





1. समष्ट्यज्ञानोपहितचैतन्यमीश्वराख्यं परमेशशरीरं मन्यते शाङ्करवेदान्ते।

2. अनादिमायायां प्रतिबिम्बितं चैतन्यमेवेश्वरस्तत्प्रतिबिम्बञ्च अविद्यायां जीव इति विवरणकारमतम्।

3. मायायां चैतन्याभास ईश्वरः, अविद्यायां च जीव इति विद्यारण्यस्वामिनः तत्त्वविवेके।

4. आनन्दमयकोशे समष्टिबुद्धिवासनासु प्रतिबिंबत ईश्वरः, विज्ञानमयकोशे व्यष्टिवासनाप्रतिबिम्बितो जीव इति त एव चित्रदीपप्रकरणे।

5. विक्षेपशक्तिप्रधाना प्रकृतिर्माया आवरणशक्तिप्रधाना च अविद्या तत्र माया ईश्वरोपाधिरविद्या च जीवोपाधिरिति केचन प्राचीना वेदान्तिन इति हंसराजा लघुवाक्यवृत्तिटीकायामाहुः।

6. अज्ञानस्य नानात्वेन तदवच्छिन्नजीवानामपि नानात्मव्। प्रत्येकं जीवस्य च पृथक्प्रपञ्चस्वीकारेण प्रत्येकमीश्वरोऽपि नानेति वाचस्पति मिश्राः।

7. अन्तःकरणे प्रतिबिम्बतं चैतन्यं जीवः तदेव अविद्यायां प्रतिबिम्बितं ईश्वर अति संक्षेपशारीरके सर्वज्ञात्ममुनयः।

8. अज्ञानोपहितचैतन्यमीश्वरः स्वप्राधान्येन जगतो निमित्तकारणं स्वोपाधिप्राधान्येन च उपादानकारणमिति वेदान्तसारे सदानन्दाः।

9. अज्ञानमेकमेव यस्मिन् प्रतिबिम्बितं चैतन्यं जीवस्तद् बिम्बञ्च ईश्वरः उपाधेरल्पज्ञत्वादिधर्मा प्रतिबिम्बपक्षपातिन इति कारणेन ईश्वरे न घटन्ते इति विवरणकारास्तदनुयायिनश्च रामानन्दादयः।

10. अज्ञानस्यैकत्वात् जीवोऽपि एक एव। जगदपि स्वप्न इव जीवकल्पितम् स्वाप्नपदार्थ इव ईश्वरोऽपि जीवनिर्मित इति सिद्धान्त मुक्तावलीकारा स्वयंप्रकाशानन्दास्तदितरे च।



11. दृष्टिसृष्टिवादेऽपि ईश्वरो बिम्बभूतः शुद्धश्चेति सिद्धान्तबिन्दुग्रन्थे मधुसूदनसरस्वत्यः।

एष्वाद्यनवपक्षाः सृष्टिदृष्टिवादानुसारमीश्वरविषये भवन्ति। अन्त्यौ च द्वौ दृष्टिसृष्टिवादानुसारमिति विवेकः।

अद्वैतबोधार्थममीषां सर्वेषां पक्षानां योग्यत्वेऽपि, सममेव मुक्तिप्रदानयोग्यत्वेऽपि न केनाऽपि पक्षेण भगवच्छरीरस्य मायाकार्यत्वं भवितुमर्हतीति दर्शयितुमयमारम्भः।

**प्रथमपक्षविमर्शः**

प्रथमपक्षे व्यष्टिसमष्टिभेदेन अज्ञानं द्विविधमुक्तम्। परन्तु व्यष्ट्यज्ञानस्य मलिनसत्त्वात्मकत्वे समष्ट्यज्ञानस्य च शुद्धसत्त्वात्मकत्वे न काप्युपपत्तिरत्र दर्शिता। व्यष्ट्यज्ञान अधिकसत्त्वाभ्युपगमे तदीयरजस्तमसोरभिभूतत्वात् सत्त्वावच्छिन्नाः जीवाः सर्वेऽपि सर्वज्ञा भवेयुः। आचार्यसिद्धान्तभ्युपगमे च भगवच्छरीरस्य मायाकार्यत्वे ब्रह्माण्ड इव भगवच्छरीरमपि एकस्थानीयं न भवेत्। भागवतादिग्रन्थेषु आचार्यकृतगोविन्दाष्टकादिग्रन्थेषु तदितरेषु च भगवल्लीलायाः वृन्दावनाद्येकस्थानीयत्वमेव प्रतिपादितम्। अल्पेदशस्थस्य व्यष्ट्यज्ञान-कार्यत्वेन मायाकार्यत्वमेवापद्यते प्रतिपादितम्। अल्पदेशस्थस्य व्यष्ट्यज्ञानकार्यत्वेन मायाकार्यत्वमेवापद्यते। परन्त्वाचार्यपादैर्गीताभाष्ये भगवद्विग्रहस्य मायाकार्यत्वं निराकृतम्। उपाधेरुपहितस्य च संबन्धः परदृष्ट्यैव भासते न स्वदृष्ट्या अतः परमेश्वरस्य समष्ट्यज्ञानस्य च संबन्धो न भवतीति यं च विना देहादिकस्य मायाकार्यत्वं न घटत इति परमेशवरशरीरं मायाकार्यं न भवितुमर्हति।

**1.** समष्ट्यज्ञानं तद्गत आभासश्च यस्य उपाधिस्तच्चैतन्यमीश्वर इति तदेव सर्वज्ञं सर्वशक्तिमम् इति च आचार्यपादमते गृहीते वाक्यान्वयो घटेत। स एवाभासो हिरण्यगर्भ इति बोध्यम्। समष्ट्यज्ञानविशिष्टाभास इति हिरण्यगर्भस्वरूपे स्वीकृते समष्ट्यज्ञानम् आभासस्य विशेषणं भवति। विशेषणञ्च विशेष्यनिष्ठमेवेति समष्ट्यन्तःकरणं हिरण्यगर्भस्य शरीरं भवितुमर्हति। विवरणकारमते तावत् उपाधिः प्रतिबिम्बपक्षपाती







भवति। एवञ्च अज्ञानं जीवेश्वरत्वविशिष्टचैतन्यस्य उपाधिरिति, नैकट्येन तज्जीवस्यापि विशेषणं भवति इति प्रतिबिम्बपक्षपातित्व कथने तात्पर्यं बोध्यम्। विशेषणस्य विशेष्यावच्छेदकत्वेऽपि उपाधेर्न उपहितस्यावच्छेदकता उपाधेर्वस्तुबहिर्भूतत्वेन रुपेणैव तद्व्यावर्तकत्वात्। इत्येवं प्रथमपक्षरीत्या भगवच्छरीरस्य मायाकार्यत्वं न सिध्यति।

**द्वितीयपक्षविमर्शः**

**2.** विवरणकाराणां मनमनुसृत्य द्वितीयपक्षे अनादिमाया-प्रतिबिम्बितचैतन्यमेवेश्वरः, अविद्याप्रतिबिंबितचैतन्यञ्च जीव इति व्यवस्था दृश्यते। मायाख्यप्रकृतौ चैतन्यस्य प्रतिबिम्बे स्वीकृते अविद्याख्यप्रकृतिप्रदेशेऽपि तत्संभवात् भगवच्छरीरं ब्रह्माण्डसदृशं भवेदिति प्रसज्यते तथा भगवच्छरीरमल्पेदशस्थमिति स्वीकृते तस्य सर्वज्ञत्वस्य अन्तर्यामित्वस्य च हानिः। तथा चेत् अन्तर्यामित्वप्रतिपादिक श्रुतेरप्रामाण्यमिति दोषः। मलिनप्रदेशत्यागपूर्वकम् अज्ञानस्य स्वच्छप्रदेशस्यैव अंशतः पूर्णतो वा भगवच्छरीरूपकार्यात्मना परिणतिरुच्यते चेत् अज्ञानस्य सावयवत्वं प्रसज्यते। निरवयवद्रव्यस्य प्रदेशाभावस्तु बादरायणैः **उभयाथाऽपि न कर्मातस्तदभाव** इति दर्शितः। निरवयवात् कथं भगवच्छरीरोत्पत्तिरिति च चिन्तनीयम्। अघटित-घटनापटीयसी मायेति कारणेन निरवयवादपि भगवच्छरीरो- त्पत्तिरिति चेदुच्यते तर्हि तत् अघटितघटनापटुत्वं मायायाः स्वतःसिद्ध माहोस्वित् चैतन्याश्रयवशात् सिद्धम्? स्वतश्चेत्, सांख्यानां जडवाद स्वीकारप्रसङ्गः चैतन्याश्रयतश्चेत् तर्हि तदेव चैतन्यं सर्वसमर्थमिति कारणेन जीवानुग्रहार्थं शरीरं स्वीकरोतीति अङ्गीकारे न काऽपि हानिः।

**तृतीयपक्षविमर्शः**

**3.** विद्यारण्यस्वामिनां मतानुसारं तृतीयपक्षे मायायां चैतन्याभास ईश्वरः अविद्यायां चैतन्याभासो जीव इति तत्त्वविवेकतो ज्ञायते। परं वेदान्ते स्वीकृताः षडेवानादिपदार्था इति सप्तमस्याभावात्

मायाऽविद्ययोर्भेदस्य दुष्प्रतिपाद्यत्वमेव। जीवेश्वरभेदस्यानादित्वात् श्रुतार्थापत्त्यैव मायाऽविद्ययोरपि भेदः सिध्यतीति न वाच्यम्। अज्ञानस्यैकत्वेऽपि जीवेश्वरभेदस्य सुघटत्वं विवरणकारैः सुष्ठु प्रतिपादितम्। अथ विद्यारण्यमतमेवानुसृत्य परिशीलिते शुद्धसत्त्वस्य अचलत्वात् रजोऽभावे स्वतो भगवच्छरीररूपकार्यात्मना परिणतिर्न भवेत्। रजः स्वीकारे नियमनार्थं तमसोऽपि स्वीकारप्रसङ्गः। उभयोरपि स्वीकारे सत्त्वस्य शुद्धत्वमेव हीयेत। तथा चेत् तादृशमलिनसत्त्वात्मकस्य परिणामत्वेन भगवच्छरीरस्य भूतकार्यापत्तिरेव। रजोगुणं विनाऽपि शुद्धसत्त्वं चैतन्याश्रयेणैव चलं भवितुमर्हतीति चेदुच्येत तदपि न युक्तम्। शुद्धसत्त्वेन निश्चलचैतन्यस्य प्रतीतिर्भवति। तादृशचैतन्यसंयोगेन शुद्धसत्त्वस्य चाञ्चल्यं कथं भवेत्।

प्राणिकर्मैव शुद्धसत्त्वप्रवर्तकमिति चेदुच्येत तर्हि तत् प्राणिकर्म किमेकैस्य प्राणिन उत समेषाम्? प्रथमे तावदीश्वरस्य सर्वदाऽवतार-प्रसङ्गस्तेन च संभवामि युगे युगे इति वचनभङ्गः। द्वितीये च प्रलयं विहाय अपरस्मिन् काले सर्वप्राणिनां कर्मणामेकत्र समवेतत्वं न घटते। प्रलयकाले च अवतारस्यैव न कोऽप्युपयोग इति कारणेन तृतीयोऽपि पक्षो न साधीयान्।

## चतुर्थपक्षविमर्शः

**4.** अथ चतुर्थः पक्षः विचार्यते। आनन्दमयकोशे सर्वबुद्धिवासनासु प्रतिबिम्बितं चैतन्यमीश्वरः तथा अनेकविज्ञानमयकोशेषु व्यष्टिबुद्धि-वासनासु मतिबिम्बितं चैतन्यञ्च जीव इति चित्रदीपप्रकरणे विद्यारण्यस्वामिनः अत्रायं विकल्पः संभवति-परमेश्वरः किमानन्दमये केवले अज्ञाने प्रतिबिम्बितं चैतन्यमुत बुद्धिवासनायुक्ताज्ञाने आहोस्वित् केवलबुद्धिवासनासु? इति। प्रथमपक्षे परमेश्वरे विवरणकारोक्ता जीवधर्माः प्रसज्येरन् अपि च अन्तःकरणरूपपरिणामं विना केवलस्याज्ञानस्य साक्षाद् भगवच्छरीरूपकार्यापत्तिर्न। द्वितीये विकल्पे







केवलस्य अज्ञानस्यैव उपाधित्वस्वीकारस्य औचित्ये बुद्धिवासना-युक्ताज्ञानस्वीकारो निष्फलः। तृतीये प्रत्येकं बुद्धिवासनाप्रतिबिम्बितं चैतन्यमीश्वर उत सर्वबुद्धिवासनाप्रतिबिम्बितम्? आखे ईश्वरस्य आनन्त्यमल्पज्ञत्वञ्च। द्वितीये सर्वबुद्धिवासनाः प्रलयकालभिन्नकाले न समूहिता भवन्ति। प्रत्येकवासनायाः कार्यं व्यष्टिस्थूलदेहः। समाष्टि-वासनानाञ्च कार्यं स्थूलविराट्देहो भवेत्। उभयथाऽपि भगवत्तनुर्न मग्याकार्यम्।

## पञ्चमपक्षविमर्शः

**5.** अथ पञ्चमः पक्षः। प्रकृतिरेकैव विक्षेपशक्तिप्रधाना माया आवरणशक्तिप्रधाना च अविद्येति तत्र माया तावदीश्वरोपाधिरविद्या च जीवोपाधिरिति वाचस्पतिमिश्राः। अत्रैवं विचार्यते यदत्र विक्षेपः कीदृशोऽभिमतः? अन्यथाभासश्चेत् सः स किं वस्तुज्ञानपूर्वक आहोस्विद् वस्त्वज्ञानपूर्वकः? प्रथमपक्षे ब्रह्मण एव स्वयं जगद्रूपेण परिणामो गले पतेत् द्वितीये च अविद्यापूर्वक एव विक्षेपः स्वीकर्तव्यो भवेत्। आवरणशून्याविक्षेपपस्वीकारे मुक्तानामपि बन्धप्रसंगः। विक्षेपस्य च आवरणरूपनियामकाभावे विक्षेपरूपप्रारब्धनाशा-निवृत्तिप्रसंगो भवेत्। तथा च विदेहमुक्तिबोधकश्रुतयो व्याकुप्येरन्।

अथापि यथा भगवच्छरीरं विक्षेपशक्तिजन्यं तथा भूतान्यपि तादृशविक्षेपजन्यानीति हेतोः भगवच्छरीरमपि भूतकार्यं भवेत्। अघटितघटनापटीयसी मायेति तस्याः सामर्थ्येन सर्वं शक्यमितिचेत् तादृशमघटितघटनापटुत्वं सर्वेश्वरस्य ब्रह्मणः किमर्थं न? यत्संनिधि-वशान्मायायास्तादृशसामर्थ्यम्। अधिष्ठानसत्त्वोपष्टब्धमायायाः सामर्थ्यं तदधिष्ठानब्रह्मण एवेति समञ्जसं खलु। एवमपि भगवच्छरीरं न भूतकार्यं न वा मायाकार्यं भवितुमर्हति।

## षष्ठपक्षविमर्शः

**6.** अथ षष्ठः पक्षः। अज्ञानं नाना। तदीया ईश्वराश्च नाना।

इति जीवेश्वरनानात्ववादिनो वाचस्पतिमिश्राः। तत्र परमेश्वर-शरीरमस्मिन् पक्षे जीवगताज्ञानकार्यं भवति। तेन भूतकार्यमेव। जीवगताज्ञानकार्यत्वे च सर्वेऽपीश्वरा अल्पज्ञा भवन्ति। ईश्वरस्यो-पाधेर्जीवगताज्ञानात् पृथक्त्वे प्रमाणाभावः। एतत्परिहारार्थं ''अविद्या-वच्छिन्नः अन्तःकरणावच्छिन्नो वा जीवः तदनवच्छिन्नश्च ईश्वर इति, अथवा अन्तःकरणमेव नाना इत्यतो जीवा अपि नाना। तथा प्रतिजीवञ्च ईश्वरो नाना। तस्यचेश्वरस्य अविद्यानवच्छिन्न त्वात् सर्वज्ञत्व-हानिर्नास्ति'' इति ते ब्रूयुः।

पक्षोऽयं सर्वथा न समीचीनो बहुदोषग्रस्तत्वात्। आदौ तावत् ईश्वरस्य सर्वशक्तिमत्त्वबोधकश्रुतिवाक्यव्याकोपः। यस्य जीवस्य य ईश्वरः स किं तस्यैव जीवस्य कर्मफलादिनियामक उत अन्यस्यापि? आद्ये ईश्वरस्य सर्वशक्तिमत्त्वहानिः, द्वितीये च एकेनैव कर्मफलनियाम-कत्वे तन्नानात्वकल्पना व्यर्था। अपि च श्रुतिस्मृतिपुराणसूत्रभाष्यवार्ति-कादिसर्वशास्त्रविरुद्धत्वात् पक्षोऽयम् अग्राह्य एव।

अथ च पक्षेऽस्मिन् ईश्वरो मायानवच्छिन्नः। माया अविद्येति अनर्थान्तरम्। मायानवच्छिन्नो यदि तदवच्छिन्नो भवेत् तर्हि तत्कार्यमेव भवेदिति तदीयशरीरस्यापि भूतकार्यत्वमापतेत्।

अनवच्छिन्नोऽपि ईश्वरः स्वयमेव शरीरं धारयतीत्युक्तेऽपि तदयोग्यं यतः अनवच्छिन्नं सर्वमपि ब्रह्मैव किल। तथात्वे सर्वमपि ब्रह्मशरीरं भवेद्। येन सर्वसाकारवादिविष्णुस्वामिमतस्य शाङ्करमते प्रवेशो दुर्वारः।

अथ ब्रह्मणः कस्मिंश्चिद् आरोपितांश एव ईश्वरत्वारोपः। यत्रारोपः तावदेव ईश्वरत्वारोपावच्छिन्नब्रह्मैव शरीरि भवतीत्युच्येत तर्हि नः पक्ष एव त्वया धृतः। वयमपि प्रतिबिम्बापेक्षिकः बिम्ब-त्वारोपावच्छिन्नः बिम्बभूतश्च परमेश्वर एव अनध्यस्तविवर्तशरीरं धारयतीति ब्रूमहे। न च यत्र यत्र विवर्तस्तत्र अध्यास इति नियमः। तत्रास्माकं विचारः भक्तिसूत्रभाष्ये प्रतिपादितः।





अथ दोषादस्मान्मुक्तिमिच्छता प्रतिवादिना यदि अविद्यावच्छिन्नं चैतन्यमीश्वरः अन्तःकरणावच्छिन्नं चैतन्यञ्च जीव इति कथ्येत, तर्हि तादृशं भगवच्छशरीरस्य अविद्याकार्यत्वात् भूतकार्यत्वमेव भवेत् भूतानामविद्याकार्यत्वात्। अपिच अविद्यावच्छिन्न ईश्वरः किम् अविद्यायाः आवरणांशावच्छिन्नः आहोस्विद् विक्षेपांशावच्छिन्नः? इति समाधेयम्। उभयथाऽपि भवत्पक्षो दोषग्रस्तः।

**सप्तमपक्षविमर्शः**

**7.** अथ सप्तमः पक्षः अन्तःकरणे प्रतिबिम्बो जीव अविद्यायाञ्च ईश्वर इत्ययं संक्षेपशारीरके सर्वज्ञात्ममुनिमतम्। इदमत्र विचार्यते।

अविद्यायां प्रतिबिम्ब ईश्वर इत्युक्ते, ईश्वरस्यापि आविद्यावरणं भूत्वा ईश्वरः असर्वज्ञो भवेत्। अविद्यावृतस्य ईश्वरस्यापि अधिष्ठान-ज्ञानादृते बद्धत्वमेव भवेत्। बद्धत्वे जीवत्वं तथात्वे संसारित्वञ्च भूत्वा तन्विमोक्षाय उपदेशापेक्षा च भवेत्। तद्रुपदेशाय नित्यसिद्धः कश्चन अपर ईश्वरः अभ्युपेयो भवेत्। (तस्यापीश्वरत्वे पूर्वोक्त-दोषतादवस्थ्याद् अनवस्था) बद्धस्य ईश्वरत्वे तद्वाक्यस्य अप्रामाणिकत्वं भूत्वा वेद एवाप्रामाणिको भवेत्।

अपिच ज्ञानेन अविद्यानिवृत्तिनियमाद् अविद्यया सह तत्प्रति-बिम्बितस्य ईश्वरस्यापि निवृत्तिर्भवेत्। तदा जीवन्मुक्तस्य प्रारब्ध-भोगनियामकः कोऽपि ईश्वरो न भवेत्। एतत्परिहाराय अविद्यायाः विक्षेपांशस्थले ईश्वरः प्रतिबिम्ब इत्युच्येत तर्हि अन्तःकरणस्यापि विक्षिप्तत्वात् तत्रापि ईश्वरप्रतिबिम्बः स्वीकार्यो भवेत्। तथाचेत् एकत्रैव जीवेश्वरयोः प्रतिबिम्बेन सांकर्यं भूत्वा जीवस्य स्वर्गनरकादिभोगः ईश्वरस्यापि प्रसज्येत।

एतत्परिहाराय अन्तःकरणभिन्नाधिकरणे ईश्वरस्य प्रतिबिंबस्वीकारे ईश्वरस्य अन्तर्यामित्वभङ्गः। तेन अन्तर्यामित्वप्रतिपादकश्रुतिबाधः। अविद्याया इव अन्तःकरणस्यापि शुद्धमलिनरूपेण सत्त्वांशद्वय-स्वीकारोऽपि न पूर्वोक्तदोषान्मुक्तिः।

कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः इत्यस्या श्रुतेरपि न भवदभिमतोर्थं शक्यः अपितु - प्रतिबिम्बापेक्षिक-बिम्बत्वारोपावच्छिन्न बिम्बभूते परमेश्वरे जीवकृता जगत्कारणत्वादिकल्पना। तदुपहित-चैतन्यस्य च परमात्मेति तटस्थलक्षणम्। एवमेव जीवस्य अन्तःकरण रूप-कार्योपाधिरपि स्पष्टः।

एवम् अस्याः श्रुतेः अविद्याप्रतिबिम्बः परमेश्वर इत्यर्थो न शक्यः। अपि च सर्वेऽप्युपाधयः प्रतिबिम्बसंपादका भवन्त्येव इति न कोऽपि नियमः। शाखायाश्चन्द्रस्योपाधित्वेऽपि न प्रतिबिम्बसंपादकत्वम्। किन्तु व्यावर्तकत्वमात्रम्। तथा जगत्कारणत्वोपाधिर्जीवः परमाणुप्रधानादिभ्यः परमात्मानं व्यावर्तयति न तु चैतन्यस्य प्रतिबिम्बं संपादयति। एवम् अविद्यायां प्रतिबिम्बः परमेश्वर इति मतं न समीचीनम्। मायायाः अविद्यास्वरूपे पूर्वोक्तदोषतादवस्थ्यम्। इति सप्तमः पक्षः। एतदनुसारमपि भगवच्छरीरस्य मायाकार्यत्वं न भवति।

**अष्टमपक्षविमर्शः**

**8.** अथ अष्टमः पक्षः। अज्ञानोपहितचैतन्यम् ईश्वरः। तदेव उपाधिप्राधान्येन जगतः उपादानकारणम्। स्वप्राधान्येन च निमित्तकारणमिति वेदान्तसारे सदानन्दमतम्।

अत्रेदं विचार्यते -

उपाधिप्राधान्येन चैतन्यं जगत उपादानकारणमित्युक्ते, उपाधिशरीरम् उपाधेयशरीरञ्च भौतिकमेव भवेत्। भगवच्छरीस्यापि मायैवोपादानकारणमित्युक्ते भगवच्छरीरस्यापि भौतिकत्वं प्रसज्येत। तदपेक्षया शुद्धचैतन्यस्योपादानकारणत्वे न दोषप्रसङ्गः।

स्वप्राधान्येनैव चैतन्यं जगदुपादानमित्युक्ते, चैतन्यस्य इच्छादिकं मायायाः विलक्षणमिति स्वीकर्तव्यं भवेत् तेन ईश्वरो न मायाया नियामको भवेत्। इच्छादिकमेव माया इति, इच्छादिकेन मायाया नियमनमिति च आत्माश्रयादिदोषापत्तिः। मायाया ईश्वरस्य मध्ये बीजवृक्षयोर्मध्ये इव प्रवाहानादिता नास्ति। इत्यतः, न दोषपरिहारः।







अतः मायावच्छेदसंपादितम् अनध्यस्तविवर्तं परमेश्वरशरीरमेव स्वरूपप्राधान्येन निमित्तकारणमिति श्रेयान् पक्षः।

**नवमपक्षविमर्शः**

**9.** अथ नवमः पक्षः। अज्ञानमेकमेव। तत्प्रतिबिम्बो जीवः। बिम्बरूप ईश्वरः। उपाधेः प्रतिबिम्बपक्षपातित्वात् अल्पज्ञत्वादिका उपाधिधर्मा जीवे भवन्ति न बिम्बभूतपरमेश्वरे इति विवरणकाराणां तदनुयायिरामानन्दादीनां मतम्।

अत्र विचार्यते -

परमेश्वरशरीरं मायाकार्यमिति स्वीकृते उपाधेः बिम्बपक्षपातित्वेन बिम्बसामर्थ्येनैव परमेश्वरशरीरमिति स्वीकार्यं भवेत्। अवतारबोधक श्रुतीनामर्थसमन्वयदृष्ट्या बिम्बसामर्थ्यस्वीकारः शब्दप्रमाणवादिनाम् अस्माकमनुकूल एव। आरोपावच्छिन्नबिम्बभूतमन्तरा अत्यन्त - निरुपाधिकस्य साकारता नास्मदिष्टा अतो नास्माकं मते विष्णुस्वामिमत प्रवेशोऽपि।

अस्य नवमपक्षस्य व्यावहारिकसत्तादृष्टया स्वीकारेऽपि अनुभवदृष्ट्या अस्य उत्कृष्टत्वं न तिरस्कार्यम्। अस्य पक्षस्य उत्कृष्टत्वात्, अत्यन्तपूज्यत्वात् अस्य खण्डने मम सामर्थ्यविरहाच्च नास्य खण्डनं क्रियते। तथापि भगवच्छरीरस्य एतत्पक्षानुसारमपि न मायाकार्यत्वमित्येव नः आग्रहः।

**दशमपक्षविमर्शः**

**10.** अथ दशमः पक्षः। अज्ञानमेकमेव। अतो जीवोऽप्येकः। स्वप्नानुभववत् प्रपञ्चो जीवकल्पितः स्वप्नगतराजा इव ईश्वरोऽपि जीवकल्पित एवेति सिद्धान्तमुक्तावलीकाराः स्वप्रकाशानन्दादयः।

एतन्मतानुसारं जीवेन स्वोपाध्येपक्षया स्वाल्पज्ञत्वादिगुणेभ्यः भिन्नः सर्वज्ञत्वादिगुणविशिष्ट ईश्वरः कल्पितः। तर्हि यो जीवः

एवंविधपरमेश्वरकल्पनायां समर्थः स तस्य परमेश्वरस्य अनघ्यस्तविवर्तं शरीरमपि कल्पयितुं समर्थ एव। अतस्तदर्थं (भगवच्छरीरस्य कृते) अज्ञात सत्तारूपिणी अनावश्यक्येव।

यद्यपि दृष्टिसृष्टिवादानुसारम् ईश्वरो जीवकल्पितस्तथापि ईश्वरस्य ऐश्वर्यमात्रं जीवकल्पितं न तु तस्य चैतन्यभागोऽपि कल्पितः। अन्यथा चैतन्यभागस्यापि कल्पनास्वीकारे स्वकल्पितपदार्थस्य स्वापेक्षया न्यूनतावश्यम्भावात् ईश्वरस्य न्यूनचैतन्यवत्ता एव। ईश्वरस्य चैतन्यभागस्यापि जीवकल्पितत्वस्वीकारे जीवकृतसृष्टौ ईश्वरोऽपि संसारी भूत्वा जीवकृतवेदज्ञानेन ईश्वरस्य मोक्षप्रसंगो भवेत्। तेन अस्मदादीनाम् ईश्वररत्वं, ईश्वरस्य च जीवत्वं प्रसज्येत। नास्मिन् शब्दमात्रवादे विपश्चितामाग्रहः।

अपि च ईश्वरस्य चैतन्यभागस्यापि जीवकल्पितत्वस्वीकारे तदपि चैतन्यं चैतन्यभास्यमिति भवेत्। भास्यभासकचैतन्ययोरभेदेन कल्पितत्वमेव भज्येत। स्वाप्नानुभवेऽपि राज्ञः साम्राज्यस्य कल्पनायामपि न तस्य राज्ञः शरीरान्तर्वर्तिसाक्षिभास्यस्य कल्पना।

अस्य दृष्टिसृष्टिवादानुसारिपक्षस्य मुमुक्षुजनोपादेयत्वात् नास्यापि खण्डने मे व्यापारः। अथापि भगवच्छरीरं न मायाकार्यमित्येव दर्शयितुमिष्यते।

**एकादशतमपक्षविमर्शः**

**11.** अथ एकादशः पक्षः।

विवरणकारमतानुसारं शुद्धः बिम्बभूतश्च ईश्वरः दृष्टि-सृष्टिवादेऽपि। अयमेव सिद्धान्तबिन्दौ मधुसूदनसरस्वतीनां मतम्।

अत्र विचार्यते।

एतत्पक्षानुसारं भगवच्छरीरं मायाकार्यमिति भवति तेन मायारूढस्य तस्य बिम्बभूतत्वमेव न संभवति। तर्हि बिम्बत्वारोपा-वच्छिन्न बिम्ब भूतम् अनघ्यस्तविवर्तं लीलया धारयति शरीरमिति





स्वीकार्यम्। लीलामात्रविग्रह एव भगवतो न मायाकल्पितो भौतिको वेति सारः। अयमेव गूढार्थदीपिकायां मधुसूदनसरस्वतीनां मतम् अस्माकमनुकूलमेव।

ज्ञानोत्तरभक्तिदृष्ट्या पक्षस्यास्य समीचीनत्वाद् अस्मिन् पक्षे नः आदरः। गीताभाष्योत्कर्षदीपिकाख्ये मधुसूदनखण्डनपरके ग्रन्थे धनपतिना ज्ञानोत्तरभक्तिपक्षः अनादृतः। तेनैव भ्रमरगीताटीकायाम्-

"तत्त्वविदां तु सर्वात्मनि रूढभावत्वेऽपि तादृशरूढप्रेमभावाद. वाञ्छा" इत्यभिधाय मुक्ता ब्रह्मभावं प्राप्ता अपि सगुणश्रीहरिभक्तिं वाञ्छन्तीति टीकितम्। भगवच्छरीरस्य मायाकार्यत्वे मुक्तानामियं वाञ्छा कथं वा संभवेत्? अनियतलक्ष्या धनपतेर्वाणी। तथाहि गीताभाष्योत्कर्ष-दीपिकायां "वर्णाश्रमकर्माणि विना न भक्तावधिकार" इत्युक्त्वा रासपञ्चाध्यायी टीकायां भक्तितत्त्वज्ञानानधिकारिणोऽपि उद्धर्तव्या इतीच्छयैव भगवदवतरणम्" इति भणितम्। एवं धनपतेः भाण्डारे वेश्यागृहे इव किं किं वा लभ्येत इत्यत्र न कोऽपि नियमः।

## परमेश्वरे देहदेहिभावं न मन्यत्ते

इति मधुसूदनसरस्वतीनामेव वाक्यस्यानुवादः सदानन्दस्वामिना अद्वैतब्रह्मसिद्धौ कृतः। अत्र एतावान् विशेषः। अनघ्यस्तविवर्तस्थले अस्माभिः प्रतिबिम्बापेक्षिकः बिम्बत्वारोपावच्छेदः अथवा विद्यावृत्त्यवच्छेदः प्रीतिवृत्त्यवच्छेदो वा स्वीकृतः। मधुसूदनसरस्वीत-भिस्तावत् न कोऽपि तादृशोऽवच्छेदः स्वीकृतः, नानध्यस्तविवर्तरूपा शास्त्रीयपरिभाषा कथिता न वा दर्शिता - इत्यतः शाङ्करमतानुयायि-भिरपि तैः शाङ्करमताद् विरुद्धमेव प्रतिपादितम्। स्वयं खण्डितस्य वल्लभसिद्धान्तस्य तैः विस्मृत्य अज्ञानेन वा स्वीकारः कृत इति महती विडम्बना। यद्यपि धनपतिना अयमंशः प्रकाशितस्तथाऽपि न तेन भगवच्छरीरस्य अनघ्यस्तविवर्तत्वं स्वीकृतं प्रत्युत मायाकार्यत्वमेवाभि-हितमिति हेतोः मधुसूदनमतव्यवस्थायाम् अयं मे उद्योगः।

## श्रुतिवाक्यसमन्वयः

### 1. आदित्यवर्णं तमसः परस्तात्।

श्रुतिरियम् ‘‘अविद्याविलक्षणचिन्मात्रपरा’’ इति मधुसूदनमतम्। सर्वाप्युपनिषत् निर्विशेषब्रह्मपरेति तदाशयः परन्तु तस्यैव सिद्धिग्रन्थस्य द्वितीयपरिच्छेदे दृश्यत्वनिरुक्तिप्रसङ्गे ‘‘वेदान्तजन्यवृत्तिव्याप्यब्रह्म मिथ्यैव न शून्यम्’’ इति अभ्युपगतम्। सिद्धान्तबिन्दौ तु ‘‘बिम्बभूतं किंवा शुद्धब्रह्म ईश्वर’’ इति कथितम्। एवमनियतं कथयतः को नियमः?

प्रक्रियाभेदेन तादृशकथनमित्युच्यते चेत् तर्हि वेदान्ताभ्युपगतः स प्रक्रियाभेदः किं वृत्तिव्युत्पादनार्थ उत सिद्धान्तभेदार्थः? आद्ये इष्टापत्तिः। अन्त्ये च नास्माकमनुकूलता। यतो हि सिद्धान्तभेदाय विरुद्धकथनञ्चेत् तर्हि ब्रह्मद्वयवादि द्वैतिनः चार्वाकस्य बौद्धस्य तदन्यस्य वा वादः मोक्षकरो भवेत्। वेदान्ताभ्युपगतः प्रक्रियाभेदः अपरोक्ष-वृत्तिव्युत्पादनार्थ एव। मोक्षाय सिद्धान्तैक्यमेव।

यद्यपि विवरणकाराणां मते विदेहमुक्तौ शुद्धस्य बिम्बरूप-परमेश्वरस्यैव प्राप्तिस्तथापि दृश्यत्वनिरुक्तौ मधुसूदनमतमन्यदेव। यदि तदेव मतमित्युच्येत तर्हि शुद्धब्रह्मणि प्रमाणमेव न भवेत्। अज्ञानोपहिते ब्रह्मणि शक्तिवृत्तेः वृत्तिव्याप्ये ब्रह्मणि लक्षणावृत्तेश्च समाप्तेः शुद्धब्रह्मणि उपनिषत्प्रमाणं न संभवेत्। शुद्धब्रह्म स्वप्रकाशमित्युक्त्वा तत्र ‘‘यत्तदद्रेश्य’’ मित्यादि श्रुतिरेव प्रमाणत्वेन दर्शितेति चेत्, सत्यं; परन्तु तया श्रुत्या वेदान्तशब्दभिन्नवृत्तिविषयत्वमेव ब्रह्मणो निषिद्धम् न तु वेदान्तशब्दजन्यवृत्तिविषयत्वम्। ‘‘शुद्धं स्वप्रकाशम्’’ इतिवाक्येन अशुद्धस्य परप्रकाशस्य च व्यावृत्त्या लक्षणया शुद्धं सिध्यतीति मधुसूदनोक्तिः। न तद् योग्यम्।

यतः एतस्मात् श्रुतिवाक्यादपि वृत्तिरुत्पद्यते वृत्तिव्याप्यब्रह्म च वृत्तिकाले उपहितमेव भवति इति मधुसूदनवचनम्। एतावानत्र वादविषयः।







अपरोक्षं ब्रह्म सर्वदा मिथ्याभूतं, शुद्धब्रह्म च सर्वदा परोक्षं शाब्दञ्चेति तद्वचने नास्माकं विरोधः। मधुसूदनस्वीकृते बिम्बप्रतिबिम्ब-न्याये सर्वं ब्रह्म बिम्बरूपम् आहोस्वित् तस्य एकदेशः? इति नः प्रश्नः। प्रथमपक्षे आरोपेऽपि न शुद्धत्वहानिः। अतः अनध्यस्तविवर्तत्वे-नापि न हानिः। अत्रास्माकम् इष्टापत्तिः। द्वितीयपक्षे च अनायासेनैव साकारसिद्धौ मधुसूदनसरस्वतीनामेव प्रतिज्ञाभङ्गः। देशावच्छेदस्य सत्तामात्रेणैव वस्त्ववच्छेदारोपसाधकत्वात्। सर्वोऽप्ययं विवर्तविषये नियमः। बिम्बभूतत्वस्य मायाकार्यत्वाभावात् अवच्छेदस्यापि न मायाकार्यत्वम्।

‘‘आदित्यवर्णं तमसः परस्तात्’’ इतीयं प्रकृता श्रुतिरुपास्यपरा व्याख्याता। तत्र नास्माकं कोऽपि विरोधः। किन्तु ‘‘तमसः परस्तात्’’ इतिवाक्यस्य मधुसूदनसरस्वतीभिः दर्शितः अर्थः न योग्यः प्रतिभाति। तदाशयोऽयम् ‘‘उपास्यविग्रहो यस्य उपलक्षणं तदेव ब्रह्म तमसः परस्तात्’’ इति वर्णितम्। रूपविशिष्टब्रह्मणस्तमसःपरस्त्वं नोक्तम्। यतो रूपविशिष्टं ब्रह्म तैः तस्मिन् प्रकरणे प्रकरणान्तरे वा न स्वीकृतम्। गूढार्थदीपिकायान्तु अमायिको भगवद्देहः स्वीकृतः। तदा प्रथमपक्षेण मायिकत्वं द्वितीयेन च ब्राह्मत्वं भगवद्देहस्य च सिध्यति।

संविधानवैलक्षण्यं विना उपलक्षणस्य विशेषणस्य च भेदो न संभवति। अतः पक्षद्वयेनापि विग्रहोपलक्षित-विग्रहविशिष्टरूपेण भेदद्वयकल्पना न योग्या।

### 2. हिरण्यश्मश्रुः हिरण्यकेशः

अथ ‘‘द्रव्यरूपगुणविशिष्टो भगवद्देहः रूपवद्भगवद्देहद्रव्योप-लक्षितो भगवदात्मा’’ इत्यपि न वक्तुं शक्यं, मायायां द्रव्यगुणादि-भेदानङ्गी कारात्।

भौतिकपक्षे रूपविशिष्टत्वनिषेधे, इष्टापत्तिः।

‘‘हिरण्यश्रश्रुः हिरण्यकेशः इत्यादिवर्णितं ब्रह्म अपरोक्षं परन्तु न आरोपितं, योषिदादिस्थले अग्नित्वारोपो नापरोक्षः’’ इति पूर्वपक्षकथनं

निराकृतं मधुसूदनसरस्वतीभिः। ''प्रतीकोपसनायां साक्षात्कारो भवेदेव इति नियमाभावेऽपि सगुणोपासनायां स भवेदेवेति श्रुतिरस्त्येव'' तस्य स्यादद्धा ''इत्यादि प्रमाणात्'' इति तैरुक्तं न योग्यं प्रतिभाति। प्रतीकभिन्नं सगुणस्वरूपं कीदृशं स्यात्? अस्तु, प्रतीकभिन्नोऽयं सगुणाकारो विलक्षण एव भवेच्चेदपि भौतिकविलक्षण एव भवेत्। अयमपि ध्यानसिद्धो न, अपितु वस्तुसिद्धो भवेत्। तस्यापि मायाकार्यत्वाभ्युपगमे प्राप्ता दोषाः पूर्वमेव दर्शिताः।

## 3. विश्वतश्चक्षुः (श्वेताश्वतरोपनिषद् 3-3)

विश्वतश्चक्षुरित्यादिश्रुतेर्मधुसूदनदर्शितोऽर्थं लक्ष्यार्थ एव। ईश्वर नियन्त्रितजीवशरीरचक्षुःपाणिशिरःप्रभृतीनाम् अनुवादित्वमेवेति मधुसूदनानां कथनं, सर्वतः पाणिपादत्वादेरसंभवात् इति हेतुरपि दर्शितः। अस्य लक्ष्यार्थस्य वाच्यार्थश्रितत्वात् वाच्यार्थो दर्शनीयः।

अस्याः श्रुतेर्वाच्यार्थः अनघ्यस्तविवर्त एवेति नो मतम्।

अथ ''सर्वतः पाणिपादत्वादेरसंभवात् विश्वतश्चक्षुरित्यादिश्रुतिः ईश्वरनियम्यजीवशरीरचक्षुः पाणिशिरःप्रभृतीनाम् अनुवादित्वमेव वदतीति मधुसूदनोक्तं कथं योग्यं स्यात्?

यतः, स्वनियम्यजीवशरीरचक्षुरादिना ईश्वरः कथमुपास्यो भवेत्? जीवस्य भौतिकं चक्षुरादि गृहीत्वा, सर्वतः पाणिपादमित्यादि-वर्णितं ब्रह्म कथमुपास्यं स्यादिति। यद्यपि प्राणादिशब्दैरपि ब्रह्मोपासना कथिता तथापि सा प्राणव्यतिरेकपूर्वकं प्राणशक्तित्वदृष्ट्यैव न तु प्राण वायु दृष्ट्या। ''प्राणो ब्रह्म'' इत्यादि श्रौतलिङ्गमपि उपास्य-प्रदर्शकमेव न तु ज्ञेयत्वदर्शकमिति बोध्यम्।

कौषीतक्यां प्रज्ञाप्राणसमन्वयेन प्राणस्य ज्ञेयब्रह्मरूपेणैव बालाकिं प्रति भगवतो व्यासस्योपदेशस्तथापि ''अत एव प्राणः'' (ब्रह्मसूत्र 1-1-23) इत्यादिसूत्रैः प्राणस्योपास्यत्वेनैव भगवता समन्वयः कृतः।



तस्य ज्ञेयब्रह्मस्वरूपस्वीकारेऽपि प्राणगुणारोपपूर्वकमेव ध्यानम्





अभिधाय ततः परं तद्गुणव्यतिरेकेणैव ज्ञानं प्राप्तव्यम्। उपासनाऽपि जीवब्रह्मभेदं पुरस्कृत्यैव अभिहिता इतीदं कर्मकर्तृव्यप्रदेशाच्च (1-2-4), शब्दविशेषात् (1-2-5) इत्यादिसूत्रस्थभगवत्पादीय भाष्यतोऽध्यव-सेयम्।

ननु मनोमयत्वादि-जीवसंबन्धि-गुणानामपि परमेश्वरे स्थापनेन खलु उपासना कथिता इति चेत्-

सत्यम्। तथाऽपि तद्गुणाधिकरणसंबन्धदर्शनेऽपि जीवे, न ते गुणा जीवे उपपद्यन्ते। ते हि खलु सत्यसंकल्पादिगुणाः परमेश्वरस्येति भगवान् बादरायणः 'विवक्षितगुणोपपत्तेश्च' इति सूत्रयामास। (1-2-2)

भौतिकस्य पाणिपादादेः परमेश्वरे कथं संभवः? ''ननु ईश्वरोऽपि शरीरे भवति? सत्यं शरीरे भवति न तु शरीरे एव भवति'' इति भाष्यविरोधात्।

पृथिव्यादिना परमेश्वरस्य यत् स्वरूपवर्णनं तदपि नोपासनार्थम् अपि तु तस्य सर्वान्तर्यामित्वकथनार्थम्। पृथिव्यादिना यत् परमेश्वर-स्योपासनम् अभिहितं तच्च मायामयपृथिवीवदवच्छेदेन अथवा पृथिवीसमशक्तित्वेन इत्यवधेयम्।

अक्षिपुरुषोपासनायामपि हिरण्यश्मश्रुत्वादिविशिष्टरूपविषये मायाकार्यत्वं भगवता भाष्यकारेण स्वीकृतम्। अतो भौतिकशरीरं तु नोपास्यं भवति। अपि च प्रतीकभिन्नसगुणोपासनाया साकारत्वानभ्युप-गमे अविद्यासाम्येन जीवस्यापि सगुणत्वप्रङ्गः। अवयवभेदे च साकार-त्वप्रसङ्गः।

साकारत्वम् अव्यापकम् इत्यपि न सुवचम्। यतः परमेश्वरे आकाशादिकस्य विषमसत्ता। अल्पपरिमाणायां कण्ठनाड्यां स्वप्ने ब्रह्माण्डसहितस्य पूर्णाकाशस्य दर्शनं किं न घटते? सेयं व्यापकत्वकल्पना शब्दमूला न भवति चेत् तुच्छा; शब्दमूला चेत् अघटितघटना पटुमायासाम्येन अल्पस्थानेऽपि भवितुमर्हतीति सर्वं समञ्जसम्।

## 4. सर्वतः पाणिपादं तत्

''सर्वतः पाणिपादं यत्'' इत्यत्र सर्वत्र पाणिपादस्य असंभवकथनम् अयुक्तम्। यन्मायया विपरीतहस्तपादादियुक्तानां कीटादीनां निर्माणं शक्यं सा माया सर्वतः पाणिपादनिर्माणं कर्तुमक्षा इति श्रुतिविरुद्धम्।

अपि च ''त्रिविक्रमावतारे पादत्रयेन ब्रह्माण्डमेव व्याप्तवान् परमेश्वरः'' इति पुराणेषु कथितस्य प्रामाण्यं विरुध्येत।

''सर्वतः पाणिपादं तत्'' इति विराट्परकं वाक्यमिति स्वीकृतञ्चेत् तर्हि ''पञ्चपुखं षण्मुखम्'' इत्यादिवाक्यानि भौतिकभिन्न-मायाकार्य-पराणीति स्वीकर्तव्यम्। तद्दृष्ट्या अस्माकं द्विभुजश्रीकृष्णब्रह्म शाङ्करमते मायाकार्यं, मधुसूदनानां गूढार्थदीपिकानुसारञ्च ब्रह्मरूपमेव। एतद्विषये मधुसूदनैः गूढार्थदीपिकायाम् अभिहितस्य समन्वयः स्वयमेव कृते अद्वैतसिद्धिग्रन्थे न कृतः। अतः परमेश्वरस्य साकारत्वनिषेधः स्वपादयोः कुठाराघात एव।

अपि च ''देशविशेषावच्छिन्न-क्रममुक्तिप्रवेष्टृत्वादिकं वक्तुम-शक्यम्'' इति यदुक्तं मधुसूदनैस्तदपि न योग्यम्। ''विकरणत्वान्नेतिचेत् तदुक्तम्'' इति ब्रह्मसूत्रे (2-1-31) ब्रह्मणः इन्द्रियाभावात् सर्वशक्ति-मत्त्वं न संभवतीति पूर्वपक्षमुपस्थाप्य मायावशादेव सर्वशक्तिमत्त्वं संभवति श्रुत्युक्तत्वादिति समाहितम्।

## 5. साकारविषये श्रुतिप्रामाण्यम्।

ब्रह्मणः साकारत्वं श्रुतिसिद्धम्। तथाहि-

''साकारस्तु द्विविधः सोपाधिको निरुपाधिकश्च।
निरुपाधिकसाकारस्त्रिविधः ब्रह्मविद्यासाकारश्चानन्दसाकार
उभयात्मकसाकारश्चेति। त्रिविधसाकारोऽपि पुनर्द्विविधो
भवति - नित्यसाकारो मुक्तसाकारश्चेति।
नित्यसाकारस्तु आद्यन्तशून्यः शाश्वतः।
नित्यसाकास्तु ऐच्छिक इति।।'' (त्रिपादमहानारायणोपनिषद्)







एवं परब्रह्मणः साकारनिराकारौ स्वभावसिद्धौ।

(सिद्धिग्रन्थे ब्रह्मणो निराकारत्वविचारप्रसंगे) अत्रैव मधुसूदनैः ''अविद्यापरिणामस्य करणस्थानीयस्य अङ्गीकाराद् अविरोधात्'' इत्यभिहितम्।

''विकरणत्वान्नेति चेत् तदुक्तम्'' इति सूत्रभाष्ये (2-1-31) भगवत्पादैरपि अविद्यामयरूपस्य उल्लेखः कृतः। परन्तु करणस्थानीय-अविद्यापरिणामः व्यापक आहोस्विद् अव्यापकः? प्रथमपक्षे जीवगता-विद्यायामपि विद्यमानत्वात् सर्वज्ञत्वादिकं जीवेऽपि प्रसज्येत। द्वितीयपक्षे ईश्वरस्य सर्वशक्तिमत्त्वादिकं बाध्येत।

''अपाणिपादो जवनो गृहीता'' इत्यादिश्रुतिः वास्तविकस्य हस्तपादादेः निषेधं करोति न वैवर्तिकस्य अतश्च परमेश्वराकारः अविरुद्धः। मायाकार्यत्वे भगवच्छरीरस्य, का अनुपपत्तय इति दर्शितचरम्। मायाकार्यत्वेन भगवच्छरीरस्य निषेधं कृता अनध्यस्त-विवर्ताङ्गीकारेण मायाकार्यत्वस्यापि निषेधं कुर्मः। अपि च विवर्तत्वाधिष्ठानरूपेण शुद्धब्रह्मणः स्थितिरपि अप्रतिहता तिष्ठति।

श्रुतिरपि यावदीश्वरसत्त्वं तच्छरीरनित्यत्वं बोधयति। कल्पान्ते अच्युतशरीरनाशो यो महाभारते वर्णितः सोऽपि देवादिसर्वलोकादर्शन रूप एव सर्वथाऽभावरूपो न। यतः वेदान्तानुसारं यावत्संसारं सत्कार्यवादोऽभ्युपगतः अतः यावदविद्यं संसारः सत्य एव। तथा भगवच्छरीरमपि यावदीश्वरं सत्यमेव। मुक्तप्राप्येश्वरपक्षे ईश्वरस्य नित्यता भगवत्पादभाष्ये, सिद्धान्तलेशसंग्रहे च कथिता। अतः भगवदाकारः नासिद्धः।

## 6. परमेश्वरविग्रहसिद्धिः

''तत् सृष्ट्वा तदेवानुप्राविशत्'' इत्यादिना भगवत्या श्रुत्या परमेश्वरप्रवेशः कथितः ''ब्रह्मविद् आप्नोति परम्'' इत्यादिना च ब्रह्मैन मुक्तप्राप्यमित्यपि कथितम्। एतस्माद् ब्रह्मणः साकारत्वं

सिध्यतीति द्वैतमतमयुक्तम्। तत् सृष्ट्वा'' इत्यादिश्रुतिवाक्यस्य तावत् प्रथममुत्पाद्य पश्चात् तत् प्रविशतीत्यर्थः। अर्थात् मन आदि अविद्याकार्यं जीवः स्फूर्तिरूपेण प्रविशतीति भावः।

परब्रह्मणो व्यापकत्वात् साक्षात् प्रवेशो न संभवतीति स्पष्टम्। तथैव ''ब्रह्मविद् आप्नोति परम्'' इत्यत्रापि यत् प्राप्यत्वमभिहितं तदपि आरोपितसगुणत्वरूपस्य दर्शकमेव। अथवा सगुणोपासनेन साक्षान्मुक्तिः संभवतीत्यस्य निदर्शकम्। तदुपहितात्मज्ञानस्य अथवा अविद्यानाशेन तात्कालिकमुक्तिप्रदस्य निर्गुणज्ञानस्य निदर्शकमस्तु। ''तमेव विद्वान्'' इत्यादिश्रुतिवाक्यस्य द्वैतिकृतव्याख्यानस्य संदर्भेऽपि एवमेव व्याख्यातव्यमिति दिक्। इति मधुसूदनोक्तौ तरङ्गिणीकारेण बहवो दोषा दर्शिताः। परन्तु ते सर्वस्यापि ब्रह्मणो विग्रहरूपत्वाभ्युपगमेन कथिता इति न ते योग्याः।

सर्वस्यापि ब्रह्मणो विग्रहरूपत्वे जीवस्यापि विग्रहरूपत्मवभ्युपगतं स्यात्। तथा चेत् न ज्ञानेन ब्रह्मप्राप्तिर्भवेत्। अपि च क्रियासिद्धा मुक्तिर्न नित्या भवेत्। अतः ज्ञानेन निर्गुणप्राप्तेः परं यावद्व्यवहारं मुक्तानाम् आनन्दस्फूर्त्या सगुणः प्राप्य इति ज्ञानोत्तरभक्तिसिद्धान्तः।

स्वर्णकणस्य स्वर्णत्वं यथा स्वर्णे एव न तु तत्कृतालङ्कारेऽपि भवेत् तथा निर्गुणं प्राप्य जीवः ईश्वरस्य स्थानं प्राप्त इव भवति। ''ईश्वरस्यैव मुक्तप्राप्यत्वात् ईश्वरप्राप्तिः शुद्धब्रह्मण एव प्राप्तिः'' इति विवरणकाराः। स्वर्णालङ्कारवत् जीवोऽपि स्वर्णकणरूप इति विग्रहवानेव इति नावश्यकं वचनम् अश्रुतत्वात्। परमेश्वरे तद्विग्रहे च महानारायणोपनिषदेव प्रमाणम्।

निर्गुणस्य जीवस्य सगुणप्राप्तिः विरुद्धा इति वक्तुं नोचितम् यतः जीवोऽपि निर्गुणमीश्वरं प्राप्य अनध्यस्तविवर्तरूपेण विग्रहवान् भवितुमर्हति।

आरोपितरूपत्वे मधुसूदनानामपि संमते, कथङ्कारं वा निषेधः क्रियत इति चेत् अयमेव भेदो यत्-







मधुसूदनमते भगवच्छरीरं मायापरिणामः अस्माकन्तु मते तत् मायारोपितचैतन्यधर्मः। तस्य स्थूलत्वसादृश्येऽपि भक्तानां हृदयं प्रवेष्टुं योग्य इति कारणेन स्थूलद्रव्यवत् मर्यादापन्नं भगवच्छरीरं न इति।

विवर्तः सर्वोऽपि कस्यचित् परिणाम एवेति न वाच्यम्। यतः नायं नियमः अनध्यस्तविवर्तविषये प्रवर्तते। परिणामस्थले परिणामि-द्रव्यस्य घटकानि भवन्ति तथा अनध्यस्तविवर्ते न लभ्यते।

रज्जुसर्प इति भ्रान्तिपरिणामः भ्रान्तिनिवृत्त्या निवृत्तत्वात्। यथा भूषणकारस्य बुद्धिः भूषणानि कल्पयित्वा पृथक् स्थातुमर्हति तथा माया परमेश्वरे शरीरं कल्पयित्वा पृथक् तिष्ठति परन्तु रज्जुसर्पं कल्पयन्ती अविद्या (भ्रान्तिः) ततः पृथक् न तिष्ठति तथा अविद्याऽपि संसारं कल्पयित्वाऽपि न ततः पृथक् तिष्ठति। यथा घटकाशस्य अवच्छिन्नत्वादिधर्माः आकाशेनैव अभिन्नाः प्रतीयन्ते न तु रूपादिवत् घटेन सह अभिन्नत्वेन। अथवा घटाकाशस्थले घटावच्छिन्नत्वम् आकाशस्यैव विशेषणं न तु घटस्य तथैव मायावच्छेदकृतं विग्रहत्वं चैतन्यस्यैव विशेषणं न तु मायायाः। घटस्य तादृशं विशेषणं नैयायिकपक्षे यद्यपि संभवति तथापि वेदान्तपरिगृहीतं पक्षतावच्छेदकत्वं न संभवति।

अथवा निराकारा घटत्वाजातिः साकारेण घटेन अवच्छिन्ना भवति, तथापि अवच्छिन्नत्वरूपधर्मः निराकाराघटत्वजातेरेव साकारघटस्य न। तद्वदेव सांशमायावच्छेदकृतं विग्रहत्वं निरंशब्रह्मणो धर्मः विशेषणं वा न तु मायायाः।

ननु विग्रहस्थले परिच्छिन्नत्वं भवति न तु घटावच्छिन्नघटत्वस्थले अतो विषमो दृष्टान्तो भवतः। नैयायिकमतेऽपि परमात्मनो विभुत्वात् न विग्रहसंभवः इति चेत्।

न। नास्माकं विषमो दृष्टान्तः। संनिहितघटावच्छेदेन सकलघटा-वच्छेदकावच्छिन्नघटत्वस्य बोधो भवति चेदपि स बोधः अलौकिक-संनिकर्षेण सामान्यलक्षणसंनिकर्षरूपेण वा भवति। स च परोक्षः आश्रयपरोक्षो वा भवति। अतः संनिहितघटावच्छेदेन तदवच्छिन्न घटत्वस्थले एवंबोधसंभवात् न विषमो दृष्टान्तः।

यद्यपि नैयायिकमते परमात्मा विभुस्तथापि नैयायिकेषु परमाणु शरीरवादिनां, आकाशशरीरवादिनाम् अवशिष्टशरीरवादिनां संभवात् न तेषाम् अपरिचितः भगवद्विग्रहः।

निराकारस्य कालस्यापि इन्द्रियग्राह्यत्वं वेदान्तपरिभाषाग्रन्थे स्वीकृतं तथा निर्गुणचैतन्यस्यापि अनघ्यस्तविवर्तरूपेण प्रतीतौ न काऽपि हानिः।

प्रत्युत, गूढार्थदीपिकाग्रन्थे वास्तवशरीरं निराकृत्य मधुसूदनैः मायाकार्यशरीरमपि निराकृतम्। प्रौढिवादार्थन्तु मायाकार्यवादः स्वीकृतः। तद्वदत्र साकारखण्डनमपि प्रौढिवादमात्रम्। तत् तेषां प्रेम्णः अप्रौढित्वं सूचयति। तथाहि गूढार्थदीपिकायामुक्तम् -

**ध्यानाभ्यासवशीकृतेन मनसा तन्निर्गुणं निष्क्रियं**
**ज्योतिः किञ्चन योगिनो यदि परं पश्यन्ति पश्यन्तु ते।**
**अस्माकन्तु तदेव लोचनचमत्काराय भूयाच्चिरं**
**कालिन्दीपुलिनोदरे किमपि यन्नीलं महो धावति।।इति।।**

सगुणविद्योपलक्षितेन आत्मज्ञानेनैव साक्षान्मोक्ष इति मधुसूदन-वचस्तावत् नित्यः साकार इति महानारायणश्रुतेः मुक्ता आणि लीलया विग्रहं कृत्वा भजन्त इत्यादिभगवत्पादीयवचनात्, गूढार्थदीपिका-संक्षेप शारीरकटीका-सिद्धान्तबिन्दु-आनन्दमन्दाकिनीत्यादिग्रन्थगतेभ्यः स्वीयवचनेभ्यश्च निरर्थकं तिष्ठति।

अपि च तैर्यदुक्तं ''भगवद्विग्रहः पाञ्चभौतिको न वा? अपाञ्च-भौतिकत्वेऽपि स मायाकृतो न वा? अमायाकृतेऽपि ब्रह्म-भिन्नोऽभिन्नो वा? भौतिकपक्षे मायापक्षे वा स्वकर्मार्जितः परकर्मार्जितो वा'' इति, तत्रोच्यते-स्वकर्मार्जितस्य भौतिकस्य मायिकस्य वा विग्रहस्य पक्षः न योग्यः ईश्वरस्यापि संसारित्वप्रसंगात्। तादृशस्य परकर्मार्जितत्वम् अस्माकं संमतम्। अमायिकविग्रहो ब्रह्माभिन्न इतिस्वीकारे द्वैतिनोऽपसिद्धान्तः। नेति नेतीतिश्रुत्या तन्निषेधात् अपाणिपादो जवनो







गृहीता, पश्यत्यचक्षुः शृणोत्यकर्ण इत्यादिश्रुतेश्च ब्रह्मणो विशेष्यत्वमत्र स्पष्टम्।

ननु अमायिकदेहस्य ब्रह्मभिन्नत्वस्वीकारेऽपि श्रुतिविरोध एव तथैव चार्वाकमतप्रवेशः प्रमाणाभावश्च। तस्माद् न भगवद्विग्रहस्य सिद्धिरिति।

तत्रोच्यते-

परकर्मार्जितः भौतिकदेहः परमेश्वरस्य संमतः अमीषाम्। परं तादृशो न संभवति। आवेशावतारस्थलेऽपि तद्देहे जीवस्यैव अभिमानः न तु परमेश्वरस्य।

अथवा ''यस्य पृथिवी शरीरम्'' इत्यादिश्रुतिसिद्धेन अन्तर्यामित्वेन सर्वेषु भौतिकपदार्थेषु परमेश्वरावेशेन सर्वेऽपि भौतिकपदार्थाः परमेश्वरस्य शरीरं भवन्ति तेन परमेश्वरो विग्रहवान् भवति अनुप्रवेशस्वीकारेऽपि न परमेश्वरस्य विग्रहसंभव इति द्वैतिखण्डनावसरे मधुसूदनवचनं व्यर्थं भवति।

जीवादिरूपेण अभिव्यक्तिरेव अनुप्रवेश अति चन्द्रिकाकारोक्तं ''यस्य आत्मा शरीरम्'' इत्यादिश्रुतिविरुद्धम्। तत्र तावत् जीवगत चैतन्यांशस्य ईश्वरशरीराभावेऽपि जीवगतस्य आभासांशस्य अवच्छेदकत्ववशात् ईश्वरशरीरत्वमिति भावः तेन श्रुतेरर्थवत्त्वं सिध्यति।

आवेशावतारस्थले जीवस्य तदाविष्टस्य ईश्वरस्य प्रतीतिः न तथा कृष्ण-विष्णु-शिवशरीरस्थले जीवान्तरारूढत्वप्रतीतिः। अत्रापि सायुज्यप्राप्तजीवानां सत्त्वेऽपि उपास्यत्वाश्रितधर्मिशरीरस्थले परमेश्वराहंस्फूर्तिरिव अनुगता।

सायुज्यप्राप्तानां जीवानां तावत् अहङ्कृतिः भोक्तृत्वमाश्रित्यैव भवति। सृष्टिकर्तृत्वादिकमाश्रित्य न। न वा असुरपरिहरणादिकमाश्रित्य। तत् सृष्टिपालनव्यापार इत्येतत् सर्वं जगद्व्यापाराधिकरणे भगवत्पूज्य-पादैः सिद्धान्तितम्।

आविष्टशरीरस्य कथा अन्यैव। तत्र शरीरे जीवस्य मुख्याभिमानः।

ईश्वरस्य च गौणः। अथवा आवेशशरीरेऽपि ईश्वरः ध्यानविषयत्वेन गृहे गृहस्थजन इव अनध्यस्तविवर्तरूपी तिष्ठति। अत्र तावत् ''ध्यानव्याजेन जातं हि मदीयं गृहमेव तत्'' इति तातोक्तं (ज्ञानेश्वरी 12/80) प्रमाणम्।

अन्यथा जीवादीनामिव ईश्वरस्यापि बुद्ध्यादौ प्रथमं प्रवेशो वक्तव्यः तथा चेत् जीवस्येव ईश्वरस्यापि आभासत्वं ततो जीवत्वं ततश्च जीवेश्वरसांकर्यं भवेत्।

बुद्धिरूपस्य उपाधेः सत्त्वेनापि सांकर्यपरिहारो दुष्करः। तादृशमपि कर्तुम् अघटिताघटनापटीयस्त्वम् ईश्वरेऽस्तीति चेत् तर्हि तत् अनघ्यस्त विवर्तेऽपि भवतु का हानिः ? न भवतीति चेद् वदेत् तर्हि तत् प्रमाणशून्यं युक्तिशून्यञ्च भवेदेव।

अतो भौतिकदेहः स्वकर्मार्जित एव न परकर्मार्जितः। परकर्मार्जितः भौतिको मायिको वा परमेश्वरो देहो नास्ति इत्येव नो ममं वल्ल्यामस्यां (प्रेमनिकुञ्जे सेव्यनिर्णये) निरूपितम्।

वस्तुतो ब्रह्मभिन्नं मायिकं देहं न कोपि द्वैती ईश्वरवादी मान्यते, तथापि उत्थाप्यशङ्कामाश्रित्य द्वैतिनः प्रति मधुसूदनानां कोटिः केवलं छलरूपा।

यद्यपि नाहं द्वैती तथाऽपि स्वपक्षीयस्य छलरूपगुणं न संस्तौमि। अथवा चिदचिन्मयभगवच्छरीरम् अभ्युपगच्छतां भगवद्रामानुजीयानां मतानुसारमपि अयमपसिद्धान्तो न भवेत्। अतो मधुसूदनवचने न्यूनदेशवर्तिछलत्वदोषः आपतति।

अथ भगवद्विग्रहो ब्रह्मभिन्न इति पक्षे अपाणिपादो जवनो गृहीता इत्यादिश्रुतिविरोध इति मधुसूदनोक्तं न युक्तं, नित्यसाकार इत्यादि महानारायणोपनिषद्वाक्यात्।

अपि च ''अपाणिपादो जवनो गृहीता'' इत्यादिश्रुतिवाक्यं पाणि-पादादिसावयवशरीरस्य निषेध परं तथापि तद् ब्रह्मणः साक्षित्वं प्रतिपादयति उत वृत्तिविशिष्टस्य विषयग्राहकत्वम् ?







प्रथमः पक्षो न युक्तः, साक्षिणः विषयस्थले वृत्तिस्थले च सम-प्रकाशसत्त्वात् पाषाणादिस्थलेऽपि आभासाभावेऽपि साक्षि-चैतन्यसत्त्वं विद्यारण्यैः पञ्चदश्यामभिहितम्।

अथ तद् वाक्यं साक्षिचैतन्यपरमिति चेत् नित्यसाकार इत्यादि श्रौतवाक्यानि निरालम्बानि भवेयुः। एकस्यापि श्रौतपदस्य निरालम्बनत्वम् अत्यन्ततुच्छमिति भगवत्पादमतम्। अत एव ईश्वरस्य सर्वज्ञत्वादिधर्माः मुक्तावपि तिष्ठन्तीति ते सूत्रभाष्ये प्रतिपादयामासुः।

द्वितीयपक्षे वृत्तिविशिष्टब्रह्मण एव विषयग्राहकत्वं वक्तव्यं भवेत्। यदि सा वृत्तिर्मायायाः स्वीकृता तर्हि मायायाः कारणवृत्तौ भेदो न संभवति कार्यवृत्तावेव स शक्यः। एवं मायाकार्यवृत्तिविशिष्टम् ईश्वरचैतन्यं विषयग्राहकम् इति स्वीक्रियेत तर्हि तस्य जीवत्वम् अपरिहार्यं भवेत्।

अथ कारणमायान्तर्गतसत्त्वमात्रवृत्तिविशिष्टम् ईश्वरचैतन्यं विषयग्राहकमित्युच्येत तर्हि पश्यति शृणोतीत्यादि-श्रौतपदानां सालम्बनत्वे सिद्धे अपि ''जवानो गृहीता'' इत्यादिपदानां निरालम्बनत्वमेव। यतः ''जवनग्रहणम्'' रजोवृत्तिं विना न घटते। अतस्तस्य श्रुतिवाक्यस्य अन्वयः 'अनध्यस्तविवर्तपर एव योग्यः, न तु शुद्धब्रह्मपरो न वा मायाकार्यपरः।

युक्तिसालम्बनतासिध्यर्थं यथा न्यायमकरन्दकारेण मुक्तावपि पञ्चमप्रकारोऽभ्युपगतः, मधुसूदनैश्च अद्वैतसिद्धौ तस्य अनुवादोऽपि कृतः तथा ततोऽप्युत्तमरीत्या श्रुतिसालम्बनतासिद्ध्यर्थं अस्माभिः भगवद्विग्रहस्य अनघ्यस्तविवर्तत्वम् अभ्युपेयते।

भगवद्विग्रहो न मायिको न वा भौतिकः। शुद्धब्रह्मापि यथार्थतो देहरुपो नास्ति। तथा यथाकथमपि भगवद्विग्रहः परमेश्वराभिन्न-इत्ययं पक्षः गुढार्थदीपिकायाः चतुर्थाध्याये मधुसूदनैः स्वीकृतः। तथापि ब्रह्माभिन्नभगवद्विग्रहे न किमपि प्रमाणं विद्यत इति यत् तद्वचनं, तस्यार्थः क इति त एव प्रष्टव्याः।

ब्रह्मणोऽभिन्नस्य परमेश्वरविग्रहस्य स्वीकारे चावार्कमतप्रवेशो भवतीति यत् तैरुक्तं तदपि अतिच्छलमात्रम्। स्वस्यैव गूढार्थदीपिका-वचनात् विपरीतम्। चावार्कस्य तु देहात्मवादः जीवविषयक न तु ईश्वरविषयकः। चार्वाकमते ईश्वरास्वीकारात्। अतश्चार्वाकः ईश्वरदेहो ब्रह्माभिन्न उत ब्रह्मणः भिन्न एवेति विचारमपि कर्तुं न शक्नोति।

**चावार्कमतपरीक्षणम् -**

शाङ्करवेदान्तिभिः चार्वाकाः त्वम्दविवेकस्य प्रथमभूमिकायामेव स्थापिताः। तथाहि -

**तृणार्चकादियोगान्ता ईश्वरे भ्रान्तिमाश्रिताः।**
**लोकायतादिसांख्यान्ता जीवे विभ्रान्तिमाश्रिताः॥1॥**

इति चित्रदीपप्रकरणे विद्यारण्यैरभिहितम्। तृणार्चकादियोगान्ताः ईश्वरं नावगतवन्तः। चार्वाकादिसांख्यान्ता जीवं नावगतवन्तः। तत्रापि ईश्वरवादिनः ईश्वरम् उपास्यं मत्वैव प्रवृत्ताः। चार्वाकास्तु ईश्वरमेव नाभ्युयगच्छन्तीति न तत्र ईश्वरोपासनायाः प्रसङ्गः। अतः ब्रह्मणोऽ-भिन्नस्य परमेश्वरविग्रहस्य स्वीकारे चार्वाकमतप्रवेश इति मधुसूदनोक्तम् असाधु।

ननु चार्वाका अपि उपास्यवृत्तिमादाय अंशान्तरेण ईश्वरं मन्यन्त इति न्यायकुसुमाञ्जल्युक्तेः, चार्वाकमते वैभवशाली पुरुषो राजेति माधवाचार्याणां कथनादपि चार्वाका ईश्वरं स्वीकुर्वन्ति परन्तु तेषाम् ईश्वरप्रतीतिः देहात्मरूपैवेति ब्रह्माभिन्नभगवद्विग्रहवादिमते चार्वाकमतप्रवेश इति मधुसूदनोक्तं साध्वेव इति चेत्; न। वैभवशालि-पुरुष एव ईश्वर इति चार्वाकाणां प्रतीतिर्न उपास्यत्वमादाय प्रवृत्ता। प्रत्युत, ईश्वरोऽभ्युपगन्तव्य एव इति चेन्मतम् तर्हि प्रभावशाली पुरुष एव ईश्वरत्वेन भाव्यताम् इति तेषां भावः। न तु राजा ईश्वर इति उपास्य इति भावः। ‘‘ऋणं कृत्वा घृतं पिबेदित्यादि चार्वाकवाक्यं राजाज्ञारूपिणीतिविरुद्धम्। बलेन कस्यापि अन्यस्य सर्वस्वापहरणं न







कश्चिद् राजा ब्रूयात्। ब्रुवाणोऽपि प्रजयैव पदात् च्यावितो भवेत्।

आज्ञाया उल्लङ्घनं न उपासनायाः सूचकम्। यतः सर्वथा उपास्याधीनतैव उपासनायाः प्रेम्णो लक्षणम्। सर्वथा उपास्याधीनत्वे च नाज्ञोल्लङ्घनस्वतन्त्रता संभवति।

एवं चार्वाकाणाम् ईश्वरस्वीकारः ईश्वरप्रतीतिमूलको न। एवं ‘‘लोकव्यवहारसिद्ध इति चार्वाका ‘‘इति कुसुमाञ्जलिग्रन्योक्तं पूर्वापरवाक्यानुशीलनेन द्रष्टव्यम्। आदौ तावत् कुसुमाञ्जलिकारेण ईश्वरवादिमतप्रदर्शनसमये प्रयोजनवाक्यम् एवं दत्तं-

**यद्यपि यं कमपि पुरुषार्थमर्थयमानाः। इति।**

यं कमपि इत्यनेन ‘‘न सर्वेऽपि ईश्वरवादिनः मोक्षमेव पुरुषार्थत्वेन स्वीकुर्वन्ति’’ इति व्यज्यते। अतः लोकव्यवहारसिद्धौ राजैव ईश्वर इति मन्वानाश्चार्वाकाः न मोक्षाय ईश्वरं मन्यन्ते। अतस्तेषां मतं सकललोकप्रतारणपरम् एव। तैस्तावत् मरणमेव मोक्ष इत्युक्तं, तन्मरणं न तैरपि राज्ञः सकाशात् प्रार्थनीयम्। अतश्चार्वाकाणाम् ईश्वर-प्रतीतिर्नास्ति। अतः ईश्वरविग्रहवादिनां मते चार्वाकमतस्य प्रवेशो यो मधुसूदनोक्तः स सर्वथा असाधु।

अपि च ‘‘लोकव्यवहारसिद्ध इति चार्वाका’’ इति वाक्यस्य व्याख्याने प्रकाशाख्ये वर्धमानाचार्येण लोकानां चतुर्भुजत्वादिव्यवहार-सिद्ध एव ईश्वर न तु कश्चन अदृश्य-इति दर्शितोऽर्थः अज्ञानमूलकः। चार्वाकमते चतुर्भुजेश्वरस्यासिद्धेः। तादृशेश्वरो न प्रत्यक्षसिद्धः। चार्वाकाश्च प्रत्यक्षातिरिक्तं प्रमाणत्वेन न खलु स्वीकुर्वन्ति। ईश्वरस्य च चतुर्भुजत्वादिकं शब्दप्रमाणमात्रगम्यम्।

लोकप्रतारकैश्य राज्ञ एव ईश्वररूपेण स्वीकारेऽपि तस्येश्वरस्य नाशोऽपि स्वस्वीकृतप्रमाणेनैव इति ते स्वीकुर्वन्ति। ब्रह्माभिन्नभगवद्-विग्रहवादिनां मते तु न तथा। अतश्च न तन्मते चार्वाकमतप्रवेशः संभवति।

दृश्यचतुर्भुजादिविग्रहवान् नित्यः परमात्मा चार्वाकैः स्वीकृतश्चेत् तर्हि ब्रह्माभिन्नभगवद्विग्रहवादे तत्प्रवेशेऽपि का हानिः? नित्यपरमात्मना सह विग्रहात्मवादस्वीकारे यदि दोषः चार्वाकमत प्रवेशश्च मधुसूदनाभिप्रेतस्तर्हि तस्याग्रे परीक्षणं करिष्यते, नित्यात्मस्वीकारेऽपि अन्वयेन देहात्मवादः उच्चकोटिवेदान्ते यथा स्वीकृतस्तथाऽग्रे दर्शयिष्यते। भगवत्पादैरपि-

**मृद्रूपो हि यथा कुम्भो तद्वद् देहोऽपि चिन्मयः।**
**आत्मानात्मविवेकोऽयं मुधैव क्रियतेऽबुधैः।।**

इत्यस्मिन् व्यतिरेकस्य गौणतास्वीकारपूर्वकं नित्यात्मनः देहे अन्वय एव मुख्यत्वेन स्वीकृतः। इदमाचार्यवचनमपि येषां न प्रमाणं, न तेषां वचनमस्मत्कृते प्रमाणम्। भगवत्पादा एव हि अद्वैतवेदान्तप्रवर्तकाः।

आचार्यवचनं प्रमाणमेवेति चेदुच्येत तर्हि ''तद्वद् देहोऽपि चिन्मय'' इति वाक्यं किम्परं? भौतिकदेहपरम्? मायाकार्यदेहपरम्? उत शुद्धचिन्मयदेहपरम्? इति कथ्यताम्।

प्रथमपक्षो न संभवति यतः सर्वैरपि आस्तिकवादिभिः भौतिक देहः तुच्छत्वेन व्यतिरेकेण तिरस्कृतः। नापि द्वितीयपक्षः। यतः ज्ञानेन मायाया निषेधस्तस्मात् मायाकार्यस्यापि निषेधो भवति। मायातः मायाकार्यतो वा ब्रह्मणः संसारेऽन्वयस्तु सिद्ध एवेति तदुपदेशो व्यर्थः स्यात् अज्ञातवस्तुन एव उपदेशस्य सार्थकत्वात्। तृतीयपक्षो नितरामयुक्तः। यतः ब्रह्मणः साकारत्वम् अद्वैतिसिद्धिग्रन्थे महता परिकरेण निराकृतः। साकारत्वस्वीकारे अव्यापकत्वादिदोषाश्च दर्शिताः। अतश्च अस्माकमेव पक्षः स्वीकार्यः।

चिन्मय इत्यत्र मयट्प्रत्ययो विवर्तविकारार्थः। मुक्तानां सद्गुरूणां च देहः अनध्यस्तविवर्त इति तदाशयः। सर्वेऽपि ब्रह्मविदः मुक्त-प्राप्यईश्वरत्वेन ईश्वराः, सर्वेषाम् अज्ञानिनाञ्च सद्गुरव इति'' तद्वद्देहोऽपि चिन्मय'' इति वाक्यं सुसङ्गतम्।







सद्गुरुं विना शिष्यस्य नान्य उपास्यः। भगवच्छरीरस्य अनघ्यस्त विवर्तत्वेऽपि तद् ब्रह्मज्ञानानन्तरं शिष्यस्य कृते परोक्षं सद्गुरोश्च कृते अपरोक्षम्।

''यस्य देवे परा भक्ति'' रित्याद्याः श्रुतयश्च भक्तौ सद्गुरोः परमात्मनश्च अभेदचिन्तनं ब्रुवन्ति। ब्रह्मज्ञानोत्तरमपि भक्तिरपेक्षितैव परन्तु -

**विहाय सद्गुरोर्भक्तिं विग्रहान्तरसेवनम्।**
**करस्थसंपरित्यागाद् धावतः पृष्ठधावनम्।।11।।**

अतः शास्त्रीयम् अनघ्यस्तविवर्तत्वम् ईश्वरस्य मुक्तजीवानाञ्च समानम्। सद्गुरुविषये तु विशेषोऽस्ति। यद्यपि सर्वे ब्रह्मविदः सद्गुरवस्तथाऽपि ते प्रतिशिष्यसापेक्षाः। अतो गुरूपासनासंकरो नास्ति। कृष्णकूर्मोपासनयोः संकराभाववदत्र बोद्धव्यम्।

अनघ्यस्तविर्वतरूपां शास्त्रीयपरिभाषाम् अनङ्गीकृत्य मधुसूदनैः तादृश एव कश्चन प्रकारो गूढार्थदीपिकायाम् अङ्गीकृतः। अद्वैतसिद्धिगतं साकारखण्डनं सर्वब्रह्मणः साकारत्वम् स्वीकुर्वतो वल्लभमतस्य खण्डनपरमिति न तत्र दोषस्तथाऽपि तत्रापि चार्वाकमतप्रवेशो न संभवति।

अस्माकन्तु मते सुवर्णालङ्कारो यथा सुवर्णव्याप्यस्तथा अनघ्यस्त-विवर्तभगवद्विग्रहः मायावच्छेदावच्छिन्नः ब्रह्मव्याप्यश्च। अस्माकम-स्मिन् मते चार्वाकमतप्रवेशः सुतराम् असंभवी।

ननु ''मुक्ता अपि लीलया विग्रहं कृत्वा भजन्त'' इत्यत्र स्पष्टमेव विग्रहस्य लीलापरिणामत्वम्। लीला च अविद्यासिद्धा-इतिचेत्; न; लीला यद्यप्यविद्यासिद्धा तथापि न मुक्तस्य तस्याः अपेक्षा। लीला बुद्धिपूर्विका भ्रान्तिश्च अज्ञानपूर्विका। अतश्च न मुक्तानां लीलासंभवः। मुक्तानामपि लीलाभ्युपगमे न सा विग्रहेऽनुगता। ध्येयरूपे मनोमात्र-विग्रहे साऽनुगता चेदपि साक्षात्कृते विग्रहे न सा सुतरां तथाविधा।

## पुरुषसूक्त-वाक्य-चिन्तनम्

पुरुषसूक्ते ''नाभ्या आसीदन्तरिक्षम्'' इत्यादिना भगवच्छरीरस्य भूतकारणत्वाभिधानात् न भूतकार्यत्वमित्ति पूर्वपक्षं खण्डयद्भिः मधुसूदनैर्यदुक्तं ''अग्निर्मूर्धा इत्यादिना श्रुतौ विराट्शरीरस्यैवाभिधानात् तस्य शरीरस्य न भूतकार्यमिति'' तदसम्यक्।

पुरुषसूक्ते द्वौ पुरुषौ श्रूयेते सहस्रशीर्षा इत्यादिना प्रथमः, ततो विराडजायत इत्यादिना च द्वितीयः। भगवच्छरीरस्य च भूतकार्यत्व-प्रतिपादनाग्रहः परपक्षद्वेषमात्रमूलः। गूढार्थदीपिकागतस्वपक्षविरोधी च। तमसः परस्तादित्यत्र श्रुतिः विराडुपलक्षितपरब्रह्म प्रतिपादयति न तु भगवद्विग्रहम् इति मधुसूदनोक्तिः सामान्यश्रुतिविषये संगच्छते। किन्तु नाभ्या आसीदन्तरिक्षम् इत्यत्र पञ्चम्यर्थः न तैर्लक्षित इति महदाश्चर्यम्।

अपि च ''एको नारायणो ह्यासीन्न ब्रह्म न च शङ्कर'' इत्यादिश्रुत्या भगवद्विग्रहस्य सिद्धिर्न भवति यतः ''सदेव सोम्य इदमग्र आसीत्'' (छां. 6-2-9) इत्यादिना श्रुतिवाक्येन सृष्टेःप्राक् सत्यमेव आसीदिति तत्रोक्तं परब्रह्मैव नारायणशब्दवाच्यमिति मधुसूदनोक्तमपि न योग्यम्।

''सदेव सोम्य'' इत्यत्र श्रुत्या ब्रह्मणो विधानमात्रं कृतं न कस्यचित् निषेधः कृतः। एको नारायण इत्यत्र तावत् नारायणविधानपूर्वकं ब्रह्मशङ्करयोर्निषेधः कृतः। एतावान् विशेषः।

यद्यपि शिवतत्त्वविवेके नारायणव्यावृत्त्या शिवत्वस्य प्राधान्यमुक्तं तथापि शिवस्य चतुर्थमूर्तित्वं स्वयम् अप्पय्यदीक्षितैः स्वीकृतम् त्रिपादमहानारायणादिषु उपनिषत्सु भगवतो नारायणस्यापि चतुर्थ-मूर्तित्वमभिहितम्। अद्वैतकौस्तुभे चतुर्थमूर्तित्वनिराकरणं भक्तिरहित-स्यैमव शोभते। सृष्टेःकृते मूर्तित्रयव्यतिरिक्तायाः चतुर्थमूर्तेरनपेक्षणात् इति अद्वैतकौस्तुकारस्य आशयः। गुणत्रयाश्रयेण परमात्मनः सृष्टिकर्तृत्वे





गुणत्रयस्य कार्यं मूर्तित्रयनिर्वाह्यमिति सत्यम्। परन्तु गुणदार्ढ्ये भूतकार्यात्मकत्वमेव भवति तदा भक्तानां कृते भगवान् अनध्यस्त-विवर्तरूपं चतुर्थदेहं धरति इत्येव शोभनम्। मधुसूदनैरपि सिद्धान्तबिन्दौ इदमेव स्वीकृतम्।

''एको नारायण इति श्रुतिः मायोपहितब्रह्मपरा न तु भगवद्विग्रहपरा'' इत्यपि न स्वारस्यं भजति। यतः मायिकभगवद्विग्रह-वादेऽपि मायोपहितब्रह्म समानमेव।

मायोपहितब्रह्मणो भगवद्विग्रहस्य पृथक्करणं नाम तस्य भूतकार्यत्वापादनमेव। तच्च श्रुतिस्मृतिपुरुणविरुद्धम्। भगवत्पादीय-गीताभाष्यविरुद्धम् अथ स्ववचोविरुद्धमपि।

इतिहासपुराणाभ्यां वेदं समुपबृंहयेदिति अत्रिस्मृतिवचनम्। मार्कण्डेयः प्रलये वटपत्रशायिनं परमात्मानं तस्य च शरीरे सर्वसृष्टिं ददर्श स च नारायणः विग्रहवान् आसीत् यस्य नाभिकमलादेव ब्रह्म बभूव इत्यनेकपुराणेषु वर्णितम्। तच्च 'एको नारायण' इत्येतदेव उपबृंहयति। अतश्च मधुसूदनोक्तमकिञ्चित्करम्। ''न चैतावता चेतनान्तरसाधारण्यम्। अखण्डमायोपहितत्वस्यैव व्यावर्तकत्वात्'' इति मधुसूदनोक्तमपि परिशील्यम्। प्रलये सर्वजीवानामिव परमात्मनः सत्ता भवतीति न वाच्यम्। उपाधिरूपेण मायाया धारणमेव तद्वैलक्षण्यम्। तद्वाक्यस्य ब्रह्मनन्दीटीकायां मायाया अविद्यायाश्च भेदं स्वीकृत्य ''मायावीत्वमेव परमात्मानं विशेषयति। मायाया प्रदेशा एव अविद्यासंज्ञका यदुपहितानामेव जीवसंज्ञा। अनादिमायाविषये यथा अजामेकाम् इत्यादि श्रुतिः प्रमाणं न तथा अनादिभगवद्विग्रहविषये किञ्चित् प्रमाणमस्ति'' इत्यादि यदुक्तं तत्र मूलग्रन्थकर्तुः टीकाकृतश्च विरोधः स्फुटः।

यतः दृष्टिसृष्टिवादपक्षे एक एव जीवः। मधुसूदनानामपि स एव अभिमत इति गूढार्थदीपिकातः सिद्धान्तबिन्दुतश्च ज्ञायते। सृष्टि-दृष्टिवादेऽपि एकमेवाज्ञानं बिम्बप्रतिबिम्बयोरुपाधिरिति विवरण-

कारपक्षस्य सत्त्वात् अखण्डमायोपहितत्वम् ईश्वस्य व्यावर्तकमिति सर्वतन्त्रवेदान्तसिद्धान्तरूपं वचनं न। अविद्यायाःमायाश्च ऐक्यपक्षे मायावीत्वमेव व्यावर्तकामिति वचने व किञ्चित् स्वारस्यम्। द्वयोरैक्ये मायावीत्वम् किम् अंशावच्छिन्तत्वम् उत पूर्णाविद्यवच्छिन्नत्वम्? आद्ये ईश्वरस्य अव्यापकत्वम् द्वितीये च ईश्वरस्य जीवत्म्। मायावीत्वं यदि निर्मथितशुद्धत्वावच्छिन्नत्वं तर्हि पूर्वमेव निर्मथनेच्छायाः सत्त्वात् निर्मथनामित्यस्य विग्रह इत्यर्वः। अयमेव भावः ईश्वरप्रणिधानाद्वा इतियोगसूत्रभाष्यवार्तिकादिषु दर्शितः। अनादिविग्रहे न किञ्चित् प्रमाणमिति टीकाकृदुक्तिः दुरुक्तिरेव नित्यसाकार इत्यादित्रिपादमहा नारायणश्रुतेः सत्त्वात्।

सृष्टिदृष्टिवादेऽपि एकमेव अज्ञानं बिम्बप्रतिबिम्बयोरुपाधिरिति विवरणकारमतस्वीकारे अस्माकमेव पक्षः सिध्यति। बिम्बत्वमेव हि अनध्यस्तविवर्तस्य अवच्छदकम्। अनध्यस्तविवर्तत्वमपि चेतनव्याप्यमेव न तु मायाव्याप्यमिति मधुराद्वैतसिद्धान्तः।

अद्वैतसिद्धिटीकायां टीकाकृता अनध्यस्तेऽप्यलीके सत्तादात्म्यस्य आरोपसंभवादिति'' प्रथमपरिच्छेदारम्भे एव भणितम्। वस्तुतः सर्वेऽपि भावाभावपदार्थाः मायाकल्पिता इति वेदान्तसिद्धान्ते सत्यपि अनध्यस्तम् अलीकपदार्थम् अङ्गीकृत्य तत्र सत्तादात्म्यं चेत् गौडब्रह्मानन्देन संभाव्यत्वेन दर्शितं तर्हि शुद्धव्याप्यस्य अनध्यस्तविवर्तरूप-भगवच्छशरीरस्य स्वीकारे का हानिः? अलीकं यदि अनध्यस्तं तर्हि वास्तवेन सतैव भाव्यम्। यतः एकं सत् नित्यं मायारहितञ्च अपरमपि अलीकं नित्यञ्च इति सर्वदा द्वैतापत्तिः। अतोऽस्माभिः ''विवर्त'' शब्द उपात्तः। ज्ञानानिवर्त्यत्वेन अनध्यस्तत्वं, विग्रहज्ञानमात्रेण अज्ञानस्य निवृत्तेरभावाच्च विवर्तत्वमिति अनध्यस्तविवर्तस्वरूपम्।

''तस्य ललाटात् त्र्यक्षः शूलपाणिरजयात'' इत्यत्र ललाटशब्देन



माया अथवा प्रलयान्ते सर्गारम्भे वा उत्पत्स्यमानशरीरस्य ललाटमित्यर्थ इति यदुक्तं तत्रापि विचार्यते यत् प्रथमार्थं रूढिसिद्धं परित्यज्य





रूपकरूपस्य द्वितीयार्थस्य ग्रहणे तुच्छता। सर्गारम्भे उत्पत्स्यमानस्य भगवच्छरीरस्य स्वीकारे तु तस्य चतुर्थमूर्तित्वं स्वतःसिद्धमेव।

## ''नित्यो नित्यानाम्'' इति श्रुत्यर्थः।

एतच्छ्रुतिस्वीकारपूर्वकं मधुसूदरनैरुक्तं ''यदत्र विग्रहस्य नित्यत्वं नास्ति। स्वरूपचैतन्यस्य स्वीकारेण श्रुत्यर्थः साधु घटते'' इति तदुन्मत्तप्रलापायते। यतः ''नित्यानाम्'' इति बहुवचनं स्वरूपचैतन्ये कथमन्वियात्? स्वरूपचैतन्यस्य अनेकत्वाभ्युगमेऽपि सजातीयभेदः प्रसज्येत। जीवत्वबाधोत्तरं जीवेश्वरयोः साम्यम्। यावद्व्यवहारं नित्य ईश्वरः एव सुन्दरः मुक्तप्राप्यश्च-इति शारीरिकसूत्रतोऽवगम्यते।

अत एव अनघ्यस्तशरीरं नित्यम्। एतस्मादपि ईश्वरचैतन्यस्य एकत्वात् ''नित्यो नित्यानाम्'' इति वाक्यं समन्वेति। अनेकेश्वरवादः नोभयोःसंमतः। तत्र गौरवदोषः वाचस्पतिनाऽपि दर्शितः।

अतः ''नित्यो नित्यानाम्'' इति श्रुतिः अनघ्यस्तविर्वतात्मन ईश्वरस्य नित्यानाम् हस्तपादादि-अवयवानां परमार्थसत्तात्वेन भगवान् नित्य इति बोधयति। शब्दनाशेऽपि तदुपलक्षितबोधो यथा न नश्यति तथा प्रतिभासावच्छेदमाया अवच्छिन्नः पमात्मविग्रहः न मायानाशेन नश्यतीति नित्यः एव। स यथार्थतः परमार्थसत्तावान् इति 'नित्यः'' इति श्रुतिसंगतिः।

## इति मधुराद्वैतसिद्धौ प्रथमं प्रकरणम्

★★★★

# [ÛVr` àH$aU_

## पुराणप्रमाणतोऽनध्यस्तविवर्तसिद्धिः

‘‘पुरा कल्पापाये स्वकृतमुदरीकृत्य विकृतम्’’ इति पुराणवाक्येन सर्गान्ते विकारजातं स्वोदरे कृतम् इति बुध्यते। अत्र ‘‘उदरे कृत्य’’ इत्यस्य विवरणे ‘‘सृष्टिसंस्काराणाम् अविद्यायामवस्थितिः’’ इति योऽर्थः मधुसूदनैः प्रदर्शितः स गगनकुसुममाला इव विचारे व्यर्थो भवति। इतिहासपुराणाभ्यां वेदं समुपबृंहयेदिति स्मृतिः खलु। प्रलयकाले शयानं नारायणं साक्षात्कृत्य मार्कण्डेयः तस्योदरं प्रविष्टः तत्र सृष्टिं साक्षाच्चकार-इति सर्वपुराणप्रमाणम्। अत्र उदरमिति रूपकमात्र-मित्युच्यते चेत् तर्हि रूढित्यागो भवति। अविद्यायां स्थिताः संस्कारा सुप्तजाताश्च मनसो न गोचरीभवन्ति इत्यतः उदरशब्दस्य ‘‘देहस्थितिः’’ इत्यर्थः योग्यः। परमात्मनः देहे मार्कण्डेयेन सृष्टिः साक्षात्कृतेति पुराणवाक्यार्थो भवति। स देहो न विराट्पुरुषस्य, ‘‘ततो विराड् अजायत’’ इति सर्गारम्भे विराडुत्पत्तिश्रवणात्। अतः परमात्मन एव स देह इति सिद्धम्। अथ ‘‘परमात्मन उदरे ब्रह्माण्डस्य प्रवेशो भवति इति स्वीक्रियते चेत् स प्रवेशः प्रलयो भवितुं नार्हति ततश्च प्रलयवर्णनमेव व्यर्थं स्यात्’’ इति मधुसूदनैर्यदुक्तं टीकाकृता च समर्थित ‘‘स्वनाशे सर्वं कार्यं कारणात्मना तिष्ठतीति प्रलयशब्दार्थः ब्रह्माण्डमपि स्वकारणात्मना तिष्ठतीत्येव भावः न तु भगवत उदरे तिष्ठतीति’’ इत्यादिना। अत्र मधुसूदन-तत्कृतिटीकाककृतश्च प्रष्टव्याः उदरे प्रवेश इति उदरप्रवेशस्य कोऽर्थोऽवगतः? उदरे अन्नस्य प्रवेशवदिति वा? अथवा पेटिकायां नाणकाणानां स्थानवदिति वा?

प्रथमपक्षे, उदरे यथा आहारस्य पचनप्रक्रियायाम् अन्नस्य सूक्ष्म रसरूपेण अवस्थितिः तथा जगतोऽपि भगवदुदरे सूक्ष्मरूपेण अवस्थितिरिति भावे सांख्यानां सत्कार्यवाद एव भवेत्। सर्वमपि कार्यं सूक्ष्मरूपेण कारणे तिष्ठतीति सत्कार्यवादसारः तथा ब्रह्माण्डोऽपि





प्रलयकाले स्वकारणे भगवच्छरीरे सूक्ष्मरूपेण तिष्ठतीति सिध्यति। एवं भागवतः चैतन्यरूपदेहाद् विषमसत्ताकं जीवदेहं मार्कण्डेयो ददर्श इति पुराणवाक्यार्थः।

भगवतश्चिद्रूपदेहस्य जीवस्य मायिकदेहस्य च विषमसत्तायामपि यावद्व्यवहारं प्रलये भगवच्छरीरे जीवशरीरप्रवेशोऽविरुद्धः। व्यवहारे भाट्टनयवत् व्यवहारे नैयायिकानां सामान्यविशेषस्वीकारवत् च तादृशप्रवेशोऽवगन्तव्यः।

अनध्यस्तविर्वतरूपे भगवदुदरे प्रलयकाले मार्कण्डेयो मायाम् आकाशञ्च स्वसंस्कारैः सह ददर्श इति भावः। एतदेव श्वेताश्वतर-उपनिषद्वाक्यात् भागवताच्च बुध्यते-

ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्’’ इति श्वेताश्वतरोपनिषद् (1-3) दर्शयति। भागवतवाक्यमेतदनुवादकम्। द्वितीयपक्षे पेटिकायां नाणकानीव भगवददुरे ब्रह्माण्डस्य स्थितिरिति वचने मधुसूदननोक्तौ बहवो दोषाः समापतन्ति।

अत्ता चराचरग्रहणात्-इति सूत्रेण (1-2-9) बादरायणेन अयमेवार्थो बोधितः। प्रलये ईश्वरः चराचरस्य सर्वस्य अत्ता भक्षक इति तदर्थः। यथा भगवतः साकारो देहः सूक्ष्मरूपेण भक्तहृदयं प्रविशति तथा प्रलये ब्रह्माण्ड एव सूक्ष्मरूपेण भगवदुदरं प्रविशतीति भावः। अतः पेटिकायां नाणकानीव स्थूलप्रवशोऽनुपपन्नः। नाणकानामिव यथावत्स्थितिरपि न समीचीना। यथा अल्पेऽपि हृदयाकाशे स्वप्नपपञ्चो दृश्यते तथा ब्रह्मण एकांशेऽपि मायाविस्तारो भवति शक्यः।

अथवा दृष्टिसृष्टिवादपक्षे प्रत्येक जीवस्य सृष्टिर्भिन्ना प्रलयश्च भिन्नः। अतः एकस्य दृष्ट्या प्रलयेऽपि नान्यस्य। आभासजीवास्तु विद्यन्त एव। दृष्टिसृष्टिवादे नेतरजीवनिषेधः कृतः। प्रलयपरा श्रुतिरपि साधकस्य कृते सर्वा सृष्टिः भगवति प्रलीयत इति भावनां बोधयितुमेव। अतः ‘‘प्रलयो’’ नाम अविद्यायां सर्वसंस्काराणां लय इत्यर्थापेक्षेया सर्वसंकाराणां भगवति सूक्ष्मरूपेण अवस्थितिरिति भगवदुदरस्थितिपर

एव अर्थः श्रेयान्। अयमेवास्य वाक्यस्य मुख्योऽर्थः। लयचिन्तनार्थश्च पूर्वोक्तरीत्या लक्ष्यार्थ इति वरम्। अविद्यैव उदरशब्दस्यार्थ इत्युक्तेऽपि न कोऽपि दोषः।

प्रलयेऽपि यथा भगवतः सत्ता तथा अनध्यस्तविवर्तरूपस्य भवगद्विग्रहस्यापीति मधुराद्वैतसिद्धान्तः। न ब्रह्मज्ञानेन तस्य निवृत्तिरिति अनघ्यस्तविवर्तरूपस्य भगवद्विग्रहस्य भक्तिर्ज्ञानोत्तरमपि संभवति।

''सर्वे नित्याः शाश्वताश्च देहास्तस्य महात्मनः। परमानन्दसंदेहाः ज्ञानमात्राश्च सर्वदा'' इति पुराणवाक्यव्याख्याने मधुसूदनोक्तं न समीचीनम्। ''प्रलयपर्यन्तं तस्य देहा नित्याः। दुःखभोगाभावेन ज्ञानमात्रप्राधान्येन च जडाः ब्रह्माभिन्नाश्च भगवद्देहा'' इति तदाशयः। श्लोकगतपदानाम् अज्ञानेन तथा व्याख्यानं प्रतिभाति। यतः मूले नित्याः शाश्वता इति, परमानन्दसन्दोहा ज्ञानमात्राश्च इति, सर्वदा इति च पदानि सारगर्भाणि।

**शाश्वता** इति लीलादृष्ट्या। भगवल्लीला शाश्वतीति तदर्थः। **'सर्वदा'** इतिपदस्य च भक्तानां हृदये सर्वदा प्रकटीभवति इति। प्रलयपर्यन्तमितिव्याख्याने स्कन्दपुराणादिवाक्यविरोधः। पुराणवाक्यानां पुराणवाक्यैः समन्वयः कर्तुं शक्यः। भगवत उदरे मार्कण्डेयेन ब्रह्माण्डो दृष्ट इत्यादिवर्णनमत्र संगतम्। अत्र टीकाकारस्यापि संमतिरास्ति।

टीकाकृन्मतानुसारं भगवद्विग्रहः आवरणशून्यः मूलकृन्मते च जडः इति स्फुटो विरोधः। गूढार्थदीपिकायामपि स्ववचोविरुद्धमेवाभिहितं मधुसूदनैः।

''रामायणे श्रीरामचन्द्रे शोकाद्यावरणं यद् वर्णितं तद् ब्राह्मणशापम् अङ्गीकृत्येति बोध्यम्। प्रलयपर्यन्तं देहसत्त्वेऽपि श्रीकृष्णेन योगबलेन स्वशरीरदाहवर्णने न कापि क्षतिः। सजातीयदेहनिर्माणेन भक्तेभ्यो दर्शनं प्रयच्छति सः।'' इति टीकाकृता कथितं भगवत्पादीय भाष्यविरुद्धम्। ''यावदधिकारमवस्थितिराधिकारिकाणाम्'' इति सूत्रभाष्ये भगवत्पादैः विवृतमेतत्। आधिकारिकजीवाः सजातीय







देहनिर्माणं कृत्वा तत्र प्रविशन्तीति चेत् तत्र जातिस्मरत्वं दुर्निवार्यम्। आधिकारिकाणां तस्य देहनाशस्य आभासत्वमेव। इतरेषां दृष्ट्या पूर्वदेहस्य तिरोभावमात्रं भवति। इयमधिकारिकाणां स्थितिः। अवतारस्य न अस्याः सजातीयता। जातिस्मरश्च जीव एव, न भगवान् श्रीकृष्णः।'' इत्येवं गूढार्थदीपिकायां मधुसूदनैरुक्तम्।

## आनन्दरूपममृतं-इति श्रुत्यर्थः

''आनन्दरूपममृतम् यद्विभाति'' इति मुण्डकोपनिषदि (2-2-7), आप्रणखात् सर्व एवानन्दमय इति तैत्तिरीयोपनिषदि (2-5) च श्रूयते। एतद्व्याख्याने मधुसूदननैरभिहितं ''एतद्वाक्याधारेण वक्तुं शक्यते यत् अहिकुण्डलवद् भगवद्देहः ब्रह्मणोऽभिन्न इति वक्तुं दुःशकम्। सर्वा अपि इमा श्रुतयो ब्रह्मपराः। ऐश्वर्यात्मकताबोधकश्रुतयश्च भायोपहितं परमात्मानं बोधयन्ति। मोदो दक्षिणः पक्ष इत्यादि-श्रुतिः आनन्दमयकोशं बोधयति। आनखाग्र आनन्दस्वरूप इत्यादि वाक्यानि भगवतो लीलाविग्रहं बोधयन्ति'' इति। तत् सर्वथा निःसारम् इति वक्तुं न शक्यते। यतः अहिकुण्डलवद् भगवद्देहं अविकृतपरिणमावादिनो वल्लभाः वदन्ति। मधुसूदनानामपि मतमिदम्। अस्माकं मते उभयोरपि कथनं न संमतम्।

अविकृतपरिणामश्च सावयवस्यैव भवति न निरवयवस्य। अनघ्यस्तविवर्तस्तु निरवयवस्यापि भवतीति कारणेन मधुसूदनोक्तिः वल्लभमतञ्च स्वमतविघातमेव।

टीकाकृतो मतस्य परीक्षाऽधुना क्रियते। ''चेष्टावत्त्वे सति अन्त्यावयवित्वं शरीरत्वं वृद्धानां मते। सावयवत्वेन अनित्यत्वं भवेदेव। ब्रह्माभिन्नं भगवच्छरीरम् अभिमतञ्चेद् ''निष्फलं निष्क्रियं'' इत्यादिश्रुतिविरोधः'' इति टीकाकृन्मतम्।

तन्न सम्यक्। यद् यत् सावयवं तत् तद् विनाशि इत्यनुमानं नैयायिकानाम्। नैयायिकानां वेदान्तिनाञ्च मिथः कलहे सत्यपि, मूर्खा

भक्तिरहिताश्च वेदान्तिनः प्रौढशब्दानां कृते नैयायिकानां शरणं व्रजन्ति। ततश्च उत्पद्यमानं संकटमपि न जानन्ति। भगवच्छरीरस्य सावयवत्व-स्वीकारे वेदान्तिभिः नैयायिकानाम् आरम्भवादोऽपि स्वीकार्यो भवेत्। तेन भगवच्छरीरस्य भूतकार्यत्वमापतेत्। यतः पृथिव्यादि भूतचतुष्टयस्य कार्यमेव सावयवं भवति इति नैयायिकानां मतम्। भगवद्देहस्य भूतकार्यत्वन्तु भगवत्पादीयगीताभाष्येण विरुध्यते। तत्र मायाकार्य-त्वमुक्तम्।

मायाकार्यत्वे च भूतकार्यत्वं कथं भक्तीति प्रागेव निरूपितम्। मायाया विवर्तस्तु न संभवति। यतः सर्वविवर्ताधिष्ठानं तावद् ब्रह्मैव। माया च न सावयवा न वा निरवयवा प्रत्युत अनिर्वचनीयेति अद्वैतमतम् विवेकचूडामणिग्रन्थे भगवत्पादैः दर्शितम्। अतः मायावयवारब्धकार्यत्वं भगवद्देहस्य न संभवति। अतश्च न टीकाकृन्मतं विचारसहम्।

## भगवद्विग्रहस्य सावयवत्वखण्डनम्

ननु दृश्यत्वेन भगवद्विग्रहस्य सावयवत्वं सिध्यति-इति चेत्, न। दृश्यत्वं न सर्वदा सावयवत्वसाधको हेतुर्न भवति। आरम्भवादे एव दृश्यत्वं सावयवत्वसाधको हेतुः। नास्माकं विवर्तवादे। अन्यथा रज्जुसर्पस्यापि सावयवत्वं वक्तव्यम्। तथा चेत् पुनः सत्ख्यातिवादस्य प्रवेशो दुर्निवार्यः।

अथ अनिर्वचनीयख्यातावपि दृष्टिसमकालीनदृश्योत्पत्तिस्वीकारात् रज्जुसर्पस्य सावयवत्वस्वीकारे का हानिरितिचेत्; न। रज्जुसर्पः अनिर्वचनीय एव उत्पद्यते तथापि न स सावयवः द्वयणुकादिक्रमेण तस्योत्पत्त्यभावात्। स्वप्नांशारंभवादेन दृष्टिसृष्टिवादस्य न कोऽपि विरोधः। तथापि तस्य आभासत्वमेव स्वीकृतम्। अतः रज्जुसर्पः विवर्तः अध्यस्तश्च। सुवर्णकुण्डलन्तु विवर्तमपि अनध्यस्तम्। बुद्धिपूर्व-कविवर्तत्वात्।

यद्यपि कङ्कणस्य दृष्ट्या कुण्डलत्वम् अविकृतपरिणामः। तथापि कङ्कणं सुवर्णस्य दृष्ट्या अनध्यस्तविवर्तः। अतः कुण्डलमपि







अनध्यस्तविवर्तः। अन्यधातुनिर्मितकङ्कणेभ्यः सुवर्णकङ्कणं पृथक्कर्तुं शक्यम्। अत्र सुवर्णं प्रत्यक्षदर्शनहेतुः। न तु कङ्कणस्य दर्शनम्। एवं सुवर्णनिरवयवस्य सर्वे अलङ्कारा अनध्यस्तविवर्तरूपाः। यद्यपि ब्रह्मदृष्ट्या सुवर्णादिकम् अनध्यस्तविवर्तः तथापि दृष्टान्तांशस्थले सिद्धदृष्टेः स्वीकारो नास्ति। सा दृष्टिः स्वीकृता चेत् साध्यासिद्धिरेव। अतः दृष्टान्तांशे सुवर्णालङ्कारा अनध्यस्तविवर्ताः। दार्ष्टान्ते च भगवद्देहः अनध्यस्तविवर्तः। अतः यत्र यत्र विवर्तः तत्र तत्र अध्यास इति पक्षोऽपि निराकृतः।

परमात्मा बुद्धिपूर्वकमेव शरीरं गृह्णाति इति योगसूत्र-भाष्य-वार्तिकादिसंमतम्। शरीरस्य कृते सः सत्त्वम् उन्मथ्नाति इति तत्र प्रतिपादितम्। सत्त्वमथनं कुर्वती बुद्धिः स्वयं सत्त्वं न भवति। अतः सा मायोपहितत्वावाच्छिन्नपरमेश्वररूपा एव भवतीति सिध्यति। सृष्टिकार्यार्थं सत्त्वशरीरग्रहणेऽपि परमात्मनः इतरेऽपि देहा भवन्तीति त्रिपादमहानारायणोपनिषदः स्कन्दपुराणस्य च समुद्घोषः। एवं सृष्टिकार्यर्थ-भक्तिकार्यार्थरूपेण स्थानकार्यभेदेन योगभाष्येण सह अविरोधः।

ननु कृष्णदेहो दग्धः स तिरोहितोऽभवत्। अर्जुनश्च तमदहत् इत्यादि-भारतवतादिवचनानां का गतिरितिचेत्;

न; तस्य देहस्य नित्यत्वमपि श्रुतिषु पद्मपुराणेऽपि च भागवते प्रतिपादितम्। कृष्णनिधनादिकं ब्राह्मणशापफलमित्यपि दर्शितम्। तत्रापि मरणाभास एव। अन्यथा श्रीरामस्य शोकः आभासमात्र इति टीकाकृता दर्शितेन सह विरोधो भवति।

ननु यदि भगवद्देहो ब्रह्मभिन्नःन, ब्रह्मस्वरूपमपि नेति चेत् भवन्मते तर्हि भाट्टानामिव गुणगुणिभेदाभेदवादः जैनानामिव वा भवेत् इतिचेत्; न; सुतरां तदस्माकं मतं न। भेदाभेदवादे समसत्ताकौ द्वौ पदार्थौ भवतः। तयोर्न कोऽपि विवर्तः। विवर्तवादे तु तयोरेकः विषमसत्ताको भवति अध्यस्तश्च।

विषमसत्तावच्छेदोपहितमूलसत्तात्मकः अनध्यास्तविवर्तो भवति। स्वरूपापरित्यागे सति, अपररूपग्रहणमिति विवर्तसामान्यलक्षणम्। विवर्तोऽयं प्रपञ्चे अध्यासपूर्वकः भगवद्देहे च अनध्यस्त इति तत्त्वम्। अथ ''त्रिपादमहानारायणादिश्रुत्या भगवद्देहस्य नित्यत्वे बोधितेऽपि युक्त्यभावात् नित्यत्वं त सिध्यति। अन्यथा सर्वं खल्विदं ब्रह्म इति श्रुत्या प्रपञ्चोऽपि ब्रह्म स्यात् ''इत्यादि यदुक्तं मधुसूदनैस्तत् श्रुतिरहस्यार्थाबोधफलम्।

यतः युक्तिरहितश्रुतिः ब्रह्मणि प्रमाणमिति ब्रह्मसूत्रकारेण ''श्रुतेस्तु शब्दमूलत्वात्'' इति सूत्रेण निगदितम्। श्रुतेःस्वतःप्रमाणत्वात् युक्तेर्नावकाश इति भगवत्पादादिभाष्यकाराणां मतम्। श्रुतिरेव ब्रह्म जगद्रूपमिति एकत्र जगतो विलक्षणामितिचान्यत्र दर्शयति। उभयत्रापि श्रुतिरेव प्रमाणं न युक्तिः भगवत्पादाः विवर्तवादम् अवलंब्य श्रुतिद्वयस्य समन्वयं साधयन्ति। यदि युक्तिं विहाय श्रुतिप्रामाण्येनैव पक्षः निर्धारणीयः तर्हि त्रिपादमहानारायणश्रुतिः भगवच्छरीरं नित्यमेव बोधयति। अनयोः समन्वयः विवर्तवादेनैव शक्यः तथापि अध्यस्त-विवर्तवादे नित्यपदाविराधो दुर्निवार्यः। अतः महानारायणोनिषदा बोधितः नित्यसाकारो भगवद्देहः अनध्यस्तविवर्त एव। अमूर्तब्रह्म-बोधकश्रुतिस्तु शुद्धचैतन्यं बोधयतीति समन्वयो योग्यः। एवं मधुसूदनोक्तं मिथ्या सिध्यति। अत्रैव स्वरूपादिवाक्यनाम् एकवाक्यता।

अथ स्वरूपानन्दवद् भगवद्विग्रहोऽपि नित्य इति यदुक्तं तत्र सत्यस्यैव ब्रह्मण एव विग्रहत्वकथने नास्माकं हानिः नाम्नि एव भेदः वस्तुनि न इति। चेष्टावदन्त्यावयवित्वं शरीरमिति लक्षणानुसारं घटस्यान्त्यावयवित्वेऽपि चेष्टावत्त्वाभावात् न शरीरत्वम् इति नैयायिकानां मतमाश्रित्य टीकाकृद्भिः मूलग्रन्थकर्तुः यत् समर्थनं कृतं तन्न योग्यम्। नैयायिकोक्तस्य शरीरलक्षणस्य ग्रहणे भाष्यकारोक्तं विग्रहलक्षणं विरुध्यते। मायाविग्रहे मायायाः अवयवित्वाभावात्। परमतखण्डनत्वरायां स्वीयपक्षपरित्यागः गौडब्रह्मनन्देन न लक्षितः।





सर्वस्य ब्रह्मणः विग्रहवत्त्वं वल्लभवेदान्तसंमतम्। अस्माकन्तु मते अनध्यस्तविवर्तत्वमेव इति नास्माकं पक्षे दोषः।

## सगुणब्रह्मणः तर्कागोचरत्वम्

''नैषा मतिस्तर्केणापनेया'' इति श्रुत्या भगवद्विग्रहस्थले तर्को न कार्य इति पूर्वपक्षे मधुसूदनैः समाहितं यत् ''निर्विशेषशुद्धचैतन्ये एव तर्को न प्रवर्तने सविशेषब्रह्मणि तर्कः प्रवर्तत एव'' इति तद् वेदान्तविरुद्धं भक्तिशास्त्रविरुद्धञ्च।

तथाहि - सर्वसविशेषब्रह्मस्थले तर्कप्रवृत्तौ स्वीकृतायां तदन्तर्गत वैदिककर्मफलस्थलेऽपि तर्कगम्यत्वप्रसक्तौ सर्वपूर्वमीमांसायाः भङ्गः, नियतवेदस्वरपाठस्य लोपः चाण्डालस्यापि वेदाध्ययनस्य प्रसङ्ग इत्यादिकं सर्वं तर्कविशेषेण प्रसज्यते।

श्रुतेस्तु शब्दमूलत्वात् इति सूत्रभाष्ये (21-27) भगवत्पादैर्विवृतं यत् निर्गुणब्रह्मणः सत्ता सृष्ट्यादिव्यापारश्च इत्येतदुभयमपि श्रुति प्रतिपादितमतः न तत्र तर्कापेक्षा-इति। सविशेषे निर्विशेषे च ब्रह्मणि न तर्कापेक्षा इति भावः। किंबहुना लौकिकविषयाणामपि शक्तिः उपदेशमन्तरेण न तर्कगभ्या इति। इमा भाष्यपङ्क्तयः-''लौकिका-नामपि मणिमन्त्रौषधिप्रभृतीनां देशकालनिमित्तवैचित्र्यवशात् शक्तयो विरुद्धानेककार्यविषया दृश्यन्ते। ता अपि तावत् नोपदेशमन्तरेण केवलेन तर्केणावगन्तुं शक्यन्तेऽस्य वस्तुन एतावत्य एतत्सहाया एतद्विषया एतत्प्रयोजनाश्च शक्तय'' इति।

ननु ''प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणम्'' इति तत्रैव भाष्ये पुराणवाक्यात् निर्गुणस्यैव तर्कागम्यत्वमिति चेत्; न। उदाहृतश्लोकस्य द्वितीयार्धोऽयं'' अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्'' इति। अनेकवचनमस्ति। ब्रह्मण अपि न तर्कगम्यता। ''प्रकृतिभ्यः'' इतिशब्दं विवृण्वता आनन्दगिरिणा प्रत्यक्षविषयाः पदार्थस्वभावा इत्यर्थो दर्शितः। अस्माद् वाक्यात् वैकुण्ठादिकस्यापि

अचिन्त्यत्वं भवति। न वयं निर्गुणब्रह्मणः अचिन्त्यत्वं नाङ्गीकुर्मः किन्तु सगुणस्यापि अचिन्त्यत्वं दृढं ब्रूमः। मायाऽपि तर्कागम्या अनिर्वचनीया अचिन्त्या चेति वेदान्तराद्धान्तः।

श्रीमद्भागवते तावत् निर्गुणब्रह्मणः कथञ्चित् तर्कगम्यत्वेऽपि सगुणब्रह्मणः सुतरां तर्कागम्यत्वमिति दशमस्कन्धे ब्रह्मदेवेन कथितम् (10-14-5,6) श्रीधरस्वामिभिरपि तस्य तादृश एवाभिप्रायः दर्शितः। तथाहि -

**तथापि भूमन् महिमागुणस्य ते**
**विबोद्धुमर्हत्यमलान्तरात्मभिः।**

**अविक्रियात् स्वानुभवादरूपतो**
**ह्यनन्यबोध्यात्मतया न चान्यथा।। (10-14-6)**

इति मूलस्य श्रीधरीटीका एवम्।

''एवं तावत् सगुणनिर्गुणयोरुभयोरपि ज्ञानं दुर्घटमिति। त्वत्कथा-श्रवणादिनैव त्वत्प्राप्तिर्नान्यथा इत्युक्तम्। इदानीं यद्यपि उभयोरविशेषेण दुर्ज्ञेयत्वमुक्तं तथापि गुणातीतस्य ज्ञानं कथञ्चिद् भवेत् न तु सगुणस्य तव अचिन्त्यानन्तगुणत्वादिति श्लोकद्वयेत स्तौति तथापीति। हे भूमन् ! अपरिच्छिन्नगुणस्य ते महिमा अमलैरन्तरात्मभिः प्रत्याहृतेन्द्रियै र्बिबोद्धुं बोधगोचरी भवितुमर्हति योग्यो भवति। अथवा निबोद्धुं ज्ञातु मर्हति अर्ह्यते शक्यत इत्यर्थः। यद्वा महिमेति महिमानं कश्चित् बोद्धुमर्हतीत्यर्थः। कथम्? स्वानुभवाद् आत्माकारान्तः-करणसाक्षात्कारात्। ननु अन्तःकरणमपि सविकारमेव विषयीकरोतीति कथमात्माकारता तस्य? इत्यत आह अविक्रियात् इति। बिक्रिया विशेषाकारः, तद्रहितात्। विशेषपरित्याग एव आत्माकारता इत्यर्थः। ननु अन्तःकरणसाक्षात्कारविषयत्वे अनात्मत्वप्रसङ्गः स्याद्। अत आह अरूपत न फलविषयत्वम्। अतो नायं दोष इति भावः। कथं तर्हि स्फूर्तिः? अनन्यबोध्यात्मतया स्वप्रकाशत्वेनैव न त्वन्यथा। इदं तदिति





विषयत्वेन इत्यर्थः। अथवा मा सर्वतोऽन्तरङ्गगा लक्ष्मीरपि अगुणस्य ते महि महिमानम् अमलैरन्तर्वृत्तिभिः इन्द्रियैरपि तथा यादृग्वस्तुतस्तेन रूपेण विबोद्धुं किमर्हति? नार्हत्येव इत्यर्थः। कथं तर्हि अर्हति? तदाह स्वानुभवाद् इत्यादिना। उक्तार्थमेवैतत्।।6।।

**गुणात्मनस्तेऽपि गुणान् विमातुं**
**हिमावतीर्णस्य क ईशिरेऽस्य।**
**कालेन यैर्वा विमिताः सुकल्पैः**
**भूपांसवः खे मिहिकाद्युभासः।। (भाग 10-14)**

**अत्र श्रीधरीयटीका -**

गुणात्मनो गुणानाम् आत्मनो गुणाधिष्ठातुस्ते तव पुनर्गुणान् विमातुम् एतावन्त इति गणयितुमपि क ईशिरे समर्था बभूवुः? दूरतस्तद्विशेष वार्ता। कथंभूतस्य तव? अस्य विश्वस्य हिताय पालनाय बहुगुणाविष्कारेण अवतीर्णस्य। ननु कालेन निपुणैः किमशक्यम्? अत आह-कालेन इति। वा शब्दो वितर्के। सुकल्पैरतिनिपुणैः बहुजन्मना कालेन भूपरमाणवो विमिता विशेषण गणिता भवेयुः। तथा खे मिहिका हिमकणा अपि तथा द्युभासो दिवि नक्षत्रादिकिरणपरमाणवोऽपि।। इति (14)

इत्थं ज्ञानविषये तर्कः प्रवर्तते। उपासनास्थले न तस्य आवश्यकता। इति विद्यारण्यस्वामिनोऽपि पञ्चदश्यां ध्यानदीपप्रकरणे (25-61) षड्भिः श्लोकैः प्रतिपादयामासुः। विस्तरभयान्न तदत्र उद्ध्रियते। जिज्ञासुभिः तत्रैव द्रष्टव्यम्। श्लोकद्वयमात्रमत्र सार्थमुदाह्रियते-

**सकृदाप्तोपदेशेन परोक्षज्ञानमुद्भवेत्।**
**विष्णुमूर्त्युपदेशो हि न मीमांसामपेक्षते।।25।।**

**ब्रह्मसाक्षात्कृतिस्त्वेवं विचारेण विना नृणाम्।**
**आप्तोपदेशमात्रेण न संभवति कुत्रचित्।।26।।**

एवं ज्ञानविषयः निर्विशेषब्रह्म। उपासनाया भक्तेश्च सविशेषब्रह्म इति वाच्यम्। तत्र उपासनाविषयस्तु मायासंवलितं सविशेषब्रह्म। भक्तिविषयश्च मायावच्छेदसंवलितम् अनध्यस्तविवर्तसविशेषब्रह्म इति बोध्यम्। विशेषो नाम अभेदस्थलेऽपि भेदावभासको धर्मः। ब्रह्मणः सर्वव्यापित्वात् भेदावभासस्थलेऽपि सत्ता अस्त्येव। एवं इदन्ताविषय एव शब्दगोचरो भवति। स च भेददृष्ट्या उपाध्यवच्छेदात्मकः सत्तारूपेण च अनध्यस्तविवर्त एव।

अतः अभेदे पूर्णभेदप्रत्ययं तस्य सत्यताबोधञ्च स्वीकुर्वतां कृष्णचैतन्यानां नात्र प्रवेशः। अवच्छेदो नाम इयत्ताकरणम् इति वेदान्तार्थो बोध्यः। मायावच्छेदावाच्छिन्नचैतन्यविग्रहवान् अस्माकं मधुाराद्वैते ध्येयः।

यद्यपीत्थं मधुसूदनमतेन बहुविरोधस्तथापि विद्यारण्या मधुसूदनाश्च वेदान्तिन एवेति हेतोः अयमत्र निर्णयः-''निर्विशेषब्रह्म-विषये तर्कः प्रवर्तते न वेति विवादः संभवति। मननपूर्वकनिदिध्यासन-वृत्तिगोचरं ब्रह्मेति तत्र निर्णयः।। सविशेषब्रह्मस्थले सुतरां तर्कः न संभवति इति प्राचीन प्रमाणबलेन सिद्धम्।

उपासनाया भक्तेश्च विशेष इत्थम्-उपासनायां मायासंवलितं सविशेषब्रह्म इत्युक्तम्। अत्र उपासस्यस्थ आकारः घटकाश्च माया-निर्मिताः भक्तौ तु भगवतः आकारमात्रं मायायाः मर्यादया अवच्छेदेन कृतमिति विशेषः। अभेदस्थले व्यापकब्रह्मव्याप्तपदार्थजाते सत्तायाम् इदमिति इदन्ताग्रहणे सत्तावच्छेदेन भेदग्रहणं भवति। तथापि तेन भेदेन मूलसत्ताया बोधो न नश्यति। सत्तारूपेणैव गृह्यते। यस्यैवं ग्रहणं भवति तत् विवर्तात्मकं चेदपि अनध्यस्तत्वात् अनध्यस्तविवर्तमिति मधुदाद्वैतसिद्धान्तः। कृष्णचैतन्यमते भगवद्विग्रहस्थले भेदाभेदवादः कथितः। परन्तु भेदाभेदोऽयम् एकसत्तयैव अभ्युपगत इति कारणेन असमीचीनः। एकस्यामेव सत्तायां पदार्थद्वयस्य सगुणनिर्गुणरूपस्य भेदाभेदः सुतरां न संभवति।





मधुराद्वैते तु भगवद्विग्रहः विवर्तः इति विषमसत्ताकः। निर्गुणब्रह्म तस्य विग्रहश्च भिन्नसत्ताकाविति तयोरैक्ये न कोऽपि दोषः। विग्रहवान् इत्यत्रापि विग्रह इत्येवार्थः। ईश्वरे देहदेहिभावस्य अभावात्। देहदेहिनोः बाह्यप्रतीतिमाश्रित्य विग्रहवान् इति प्रयोगः।

ननु श्रद्धाजाड्यपूर्वकत्वात् सगुणब्रह्मणः तुच्छत्वं भवेदितिचेत्; न; तत्रापि अश्रद्धानिवर्तनार्थं तर्कापेक्षा। श्रद्धाभञ्जकस्य तर्कस्य तु न काप्यपेक्षा। मधुसूदनदर्शितस्तर्कस्तु श्रद्धाभञ्जक इति सर्वथा तुच्छत्वं व्रजति।

## विग्रहविषये शङ्का तन्निवारणञ्च

सविशेषब्रह्मविषये तर्कः प्रवर्तते न तु निर्विशेषब्रह्मविषये। अरूपत्वे अदृश्यत्वम् सरूपत्वे च पिशाचवदन्तर्धानम् इत्यादिना सविशेषे तर्कप्रवृत्तिः मधुसूदनसंमता।

इदं न समीचीनम्। निर्विशेषब्रह्मविषये आकाशादिदृष्टान्ता वेदान्तिभिः दर्शिताः। न तत्र अस्माकं हानिः। मायाविग्रहविषये मधुसूदनानाम् आक्षेपः मायाविग्रहवादिवेदान्तिपक्षे प्रसरति तेन स्वपक्षदोष एव। न त्वस्माकं पक्षे दोष इति पूर्वमेव दर्शितम्।

अथ टीकाकृन्मतं विचार्यते। इन्द्रादीनामिव परमेश्वरस्यापि अन्तर्धानशक्तिवशात् श्रीकृष्णादीनामपि देहः सदातनोऽपि क्वचिदेव दृश्यो भवेत् अतो न चाक्षुष इति चेत् न; भवन्मते श्रीकृष्णदेहस्य चाक्षुषत्वाभावः अस्माकन्तु मते चाक्षुषत्वाप्रसङ्गः इतीयान् भेदः। अतो विग्रहवत्त्वमिति भवत्कथनं न योग्यम्। अभावपक्षे अप्रसंगपक्षे वा विग्रहस्य साकारत्वम् अयुक्तम्। यतः नीलत्वादिजातिव्याप्यनीलादि-रूपाणि सामान्यतः पृथिवीनिष्ठानि पृथिवीजन्यानि च। अतो न तानि ब्रह्माणि संभवन्ति। जन्यत्वात् नित्यानि च न भवन्ति।

## श्रीकृष्णरूपम् अपाकजम्

विग्रहे जन्मरूपस्य स्वीकारे तद् रूपं किं विग्रहकारणाद् उत्पद्यते उत पाकतः ? विजातीयतेजःसंयोगजन्यरूपं पाकः।

विग्रहस्य नित्यत्वम् अङ्गीकुर्वतां भवतां मते न प्रथमःपक्षः शक्यः। न द्वितीयोऽपि यतः श्रीकृष्णस्य पाकजरूपस्वीकारे अनेकरूपाणि स्वीकार्याणि भवन्ति-इत्यादिटीकाकृत्मतं तुच्छम्।

यतः पाकजं पार्थिवं वा रूपं नैयायिकानां मतानुसारमेव न वेदान्तिनाम्। वेदान्तनये तावत् रूपम् अग्नेर्धर्मः। तर्हि अद्वैतसिद्धिटी-काकारेण वेदान्तमतानुसारं शङ्का करणीया तथापि स्वरक्षणार्थमेव तेन न्यायकञ्चुकं धृत्वा विग्रहविषये दोषाः प्रदर्शिताः। सर्वेऽपि ते अप्रयोजकाः। यतः भूतकार्यत्वं विग्रहस्य वेदान्ते न स्वीकृतम्। अतः पार्थिवरूपशङ्काऽपि निर्मूला। पार्थिवरूपेण अस्माकम् अमायिक-विग्रहवत्ता मा सिध्यतु नाम, तथापि मायिकविग्रहवत्तापि कथं वा सिध्येत्?

भगवद्विग्रहस्य रूपं कारणजन्यं न वेति टीकाकृतः प्रश्नः। अत्रेदं विचार्यते-कारणजन्यम् इत्यत्र कारणशब्दस्य कोऽर्थः पार्थिवपरमाणुः उत माया?

प्रथमपक्षे भगवच्छरीरस्य भूतकार्यत्वं कथयतः प्रति स प्रश्नः। न वयं भूतकार्यवादिनः। द्वितीयपक्षे मायाकार्यत्वं पूर्वमेव बहुधा निराकृतमिति न पृथक् कथनस्य अपेक्षा।

अपि च न वयं वल्लभा इव सर्वस्यापि ब्रह्मणो नित्यविग्रहवत्त्वम् अभिदध्मः अपि तु अनध्यस्तविवर्तत्वमेव। अयमेव भेदः। परिभाषामात्र-त्वेऽपि तस्य न नाममात्रत्वम्।

न वयं भगवद्विग्रहस्य पाकजरूपं वदामः। टीकाकारस्तु ''श्रीकृष्णस्य पाकजनानारूपस्वीकारे नूतनजलधरस्येव नीलरूपस्य ध्यानं कार्यं, किंवा इन्द्रनीलस्य इव नीलरूपस्य ध्यानं कार्यम्? इति संशयेन अव्यवस्था। सर्वाण्यापि रूपाणि उपास्यानि इत्यपि न। गौतमीये







नीलमेघश्यामरूपस्य ध्यानं विहितम्'' इत्यादि जल्पति। नूनं सुरापान-प्रभावोऽयं टीकाकृतो जल्पनम्।

**आसन् वर्णास्त्रयो ह्यस्य गृह्णन्तोऽनुयुगं तनुः।**
**शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः॥**

इति श्रीमद्भागवतदशमस्कन्धे अष्टमाध्यायस्य त्रयोदशतमः श्लोकः संस्कृते न्यायभाषां प्रजल्पता टीकाकारेण न दृष्टः। गौतमीयतन्त्रेऽपि एकस्यैव रूपस्योपासना कथिता। तदपि पाकजमिति न कोऽपि मन्यते। अतः टीकाकारस्य जल्पनम् उन्मत्तप्रलापवद् अश्रोतव्यमेव।

अपि च यदुक्तं ''भगवद्विग्रहवादी यदि ब्रूयात् श्रीकृष्णादि-विग्रहस्य नीलत्वादिजातिषु प्रत्येकजातिरूपम् उपास्यम्। अतः श्रीकृष्णादिविग्रहस्य पाकजनानरूपस्वीकारेऽपि नोपासनायाः अव्यवस्था इति न वाच्यम्'' इति।

तदत्यन्तमसत्प्रलपनम्। क एवं ब्रूयात्। स्वतःकल्पितपूर्वपक्ष एव अयम्। जगति न केनाऽपि अद्ययावत् पक्षोऽयम् उपस्थापित; वेदान्ताश्रयेण भविष्यत्काले न केनापि कर्तुं शक्य इति दृढम् अहं ब्रवीमि। भूतकार्यभगवद्विग्रहवादी तु नास्तिकपक्षे निक्षिप्त इति न तस्य प्रामाण्यम्।

अस्तु। अस्य स्वकपोलकल्पितपूर्वपक्षस्यापि यदुत्तरं तेन टीकाकारेण दत्तं तदपि विचित्रम्। तथाहि-पाजरूपस्वीकोरऽपि एतादृशाग्निसंयोगेन ब्रह्मणः पाको भवतीति अत्र न किमपि नियामकम् इति तस्योत्तरम्। कस्यायं पक्ष इति मद्यपः टीकारो मन्यते? अग्निसंयोगेन ब्रह्मणः पाको भवतीति को वदति। वयन्तु श्रुतिस्मृतिपुराणवाक्यप्रमाणेन रूपसिद्धिं दर्शयामः न तु कुतर्काधारेण। पुनश्च टीकाकृतः हठ एवं प्रवर्तते। सर्गारम्भे ब्रह्मण एवंविधः पाको भवतीति न वाच्यम्। यतः रूपरसगन्धस्पर्शा एव गुणाः नाशं यान्ति इति कल्पनायां गौरवदोषः।

द्रव्यनाशेनैव तदाश्रितगुणनाशः संभवति। अतः अनादिरूपादिमद्देहस्य नाशे सर्गारम्भे तथाविधस्य देहान्तरस्य पाकजोत्पत्तिरित्येव वाच्यम् अत एव ''रूपादिमत्त्वाच्च विपर्ययो दर्शनाम्'' इति ब्रह्मसूत्रेण (2-2-15) पृथिव्यादिभूतानां विशेषेण सामान्यतश्च नाशः कथितः। तत्र अस्मत्कृतायां सूत्रमुक्तावलीटीकायां त्रसरेणुस्थले पाकजरूपस्य उत्पत्तिकथनापेक्षया अनादि-रूपादिविशिष्ट-त्रसरेणुरेव पाकज इति कथनं वरमिति तर्कपूर्वकम् अस्माभिर्दर्शितम्।'' इति।

दर्शितं स्यान्नाम्। सूत्रमुक्तावलीटीकाया विषयस्तावत् भगवत्पाद भाष्यसमर्थनम्। न तु भगवद्विग्रहस्य खण्डनम्। स्वकीयवचनमेव प्रमाणमिति स्वपत्नीं विना कः स्वीकुर्यात्?

अनादिरूपादिविशिष्टस्य द्रव्यस्य पाकस्वीकारे गुणानामनित्यता गुणिनामप्यनित्यता इति दोषः। स च सद्यः वैशेषिकाणामाश्रयं भजतस्तव पक्षे वैशेषिकमतविरोधात्। वेदान्तपक्षमाश्रित्य वैशोषिक-पक्षस्वीकारेऽपि स स्वीकार नास्तिकमतखण्डनार्थमेव आस्तिक मतखण्डनार्थं न।

परन्तु अल्पज्ञानेन दुर्विदग्धा एतट्टीकाकारसदृशा अरण्यपण्डिता वेदान्तिब्रुवा वृथा प्रलपन्तो भवन्ति।

शास्त्रान्तरेणाऽपि स्वमतसिद्धिः कार्या इति यद्यपि विद्यते तथापि तेन स्वमतभङ्गो न करणीयः। अद्वैतसिद्धिटीकाकारेण वैशेषिक मतमवलम्बमानेन स्वमतभङ्गो न लक्षितः। सर्गारम्भे पाकजन्य अनादि-रूपादिविशिष्टस्य भगवदेहस्य नाशे पुनः पाकेन ईश्वरो देहान्तर मुत्पादयति इति टीकाकारः पूर्विपक्षकथनमुपस्थापयति। एवंविधः पूर्वपक्षःतस्य स्वप्ने उत्पन्नःस्यात्। वास्तविके जगति क एवं ब्रूयात्? स्वीयम् उपास्यम् अग्निसंयोगेन पच्यत इति कल्पना न म्लेच्छधर्मेऽपि दृश्यते। तर्हि कथम् आर्यधर्मे सा कृता? मायाकार्यभगवद्-विग्रह-वादिनाऽपि अग्निसंयोगेन ईश्वरः पच्यत इति न स्वीक्रियते यतः तादृशपाकस्वीकारे भूतकार्यविग्रहवादो भवति।





## अवतारदेहस्य जठराग्निसंयोगाभावः

भागवतदशमस्कन्धे तस्य श्रीधरीयटीकायाञ्च अवतारदेहस्य गर्भपाक इव जठराग्निसंयोगो ऽपि न संभवतीति प्रतिपादितम्। तथाहि-

**भगवानपि विश्वात्मा भक्तानामभयङ्करः।**
**आविवेशांशभावेन मन आनकदुन्दुभेः।।**

इति तत्रस्थश्लोकस्य (10-2-16) श्रीधरीयटीकायां ''मन आविवेश मनसि आविर्बभूव। जीवानामिव न धातुसंबन्धमित्यर्थ'' इत्युक्तम्। अयं भावः - पूर्णं सच्चिदानन्दभगवद्रूपमेव भक्तस्य उपासकस्य वा अन्तःकरणे रूपं धरति तदेव तस्य भक्तस्य प्रेम्णि, उपासकस्य वा ध्याने एकीभूय प्रेम्णो ध्यानस्य वा निमित्तेन आविर्भवति। अन्तःकरणे आविर्भावेऽपि न तस्य मानसशरीरत्वम्। यतः स्वगर्भे तस्य प्रवेशो देवक्याऽनुभूतः। मानसशरीरत्वे तस्य देवकीगर्भप्रवेशो न संभवति। देवक्या मनस्याविर्भाव इत्युक्तेऽपि न तस्य मानसशरीरत्वम्। यतस्तदेव बहिरपि आविर्भूतम्। देवक्या एव मानसशरीरं प्रकटमभूदित्यपि न वाच्यम्। देवक्या मनोनाशस्य प्रसङ्गात्।

न तच्छरीरं मनसोंऽशरूपम्। वेदान्ते मनसः भौतिकत्वस्वीकारात्। न्यायमतेऽपि दीधितिकारेण मनसोऽणुकार्यत्वमभिहितम्। अतः मनसोंऽशरूपत्वे भगवच्छरीरस्य भूतकार्यत्वमापतेत्। अतः भगवत एव शरीरेण मनसि जगति च आविर्भावो जात इति स्वीकारो योग्यः। देवक्या गर्भधारणानुभवः तस्याः प्रार्थनायाः फलमित्यवगन्तव्यम्। अन्यथा देवकीगर्भवासो यथार्थ इति स्वीकारेऽपि देवकीगर्भे प्रथमम् अष्टवर्षमूर्तेरेव जन्माभूदिति भागवतवचनेन सह विरोधो दुर्वारः। अतः स्वप्रार्थनानुगुणमेव देवक्या स्वगर्भे भगवत्प्रवेशोऽनुभूत इति बोध्यम्।

इत्थं भक्तिरूपस्यापि न पाकजत्वम्। न वोपास्यस्य। तथाहि श्रुतिः-

**चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः।**
**उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना।।(रामतापनीया)**

**अस्या अयमर्थः-** ब्रह्म **चिन्मयम्** अर्थात् अज्ञाननिवृत्तिविशिष्ट-वृत्तिज्ञानवर्ज्यज्ञानमात्रम्। तादृशं चैतन्यमेव चिन्मयम्। ब्रह्म **अद्वितीयम्** अर्थात् स्वापेक्षया सर्वस्यापि विषमसत्ताकत्वात् स्वस्मिन् स्वरूपे सर्वकारणविकाराभावात् स्वसमानस्य अन्यस्याभावः। ब्रह्म **निष्कलम्** अर्थात् विषमसत्ताकस्य विवर्तत्वेऽपि नाधिष्ठानहानिरिति निष्कलम्। ब्रह्म **अशरीरि**। अर्थात् अनघ्यस्तविवर्तादृते नेश्वरशरीरम् अध्यस्त शरीरादृते न जीवशरीरमिति हेतोः स्वयम् अशरीरि। तत्र उपासकानां कार्यार्थं रूपकल्पना। कल्पना नाम प्रतिबिम्बापेक्षिकबिम्बत्वोरोपा-विच्छन्नबिम्बस्य कल्पना जीवापेक्षया। अन्यथा सर्वेषाम् अवताराणां व्यर्थताप्रसङ्गः। अथवा कल्पनाशब्दस्य मनोवृत्तिरिति अर्थे स्वीकृते अस्याः श्रुतेर्ध्यानमित्येवार्थः। कस्मिन्नपि वा पक्षे परमेश्वरस्य पाकजशरीरं न संभवति। अतः कल्पितपूवपक्षोत्थापनं तस्यार्धाङ्गीकारः, तस्य च समानाधमित्येतत् सर्वं सुरामत्तप्रलपनं टीकाकारस्य।

त्रसरेणोः पाकजत्वात् नीलादिव्यक्तयः प्रत्येकं स्वतन्त्रा इति मीमांसकाः, तेनैव कृष्णाय देवकीपुत्राय इत्यादिश्रुतिस्मृतिवचनानि सार्थानि भवन्तीति टीकाकारः। अनादिरूपादिविशिष्टपूर्वदेहनाशे सर्गादौ पाकेन तत्सदृशदेहोत्पत्तिरिति स्वीकारोऽत्र दृश्यते। परन्तु एतच्छ्रुतिस्मृति वाक्यानामर्थः श्रीमद्भागवतश्लोकस्य पूर्वदर्शितार्थ एव। अन्यथा वेदान्तिनश्चाप्यस्य टीकाकारस्य गले भगवद्विग्रहस्य भूतकार्यत्वं बलेनापतति। मायाकार्यवादेऽपि दर्शितदोषप्रसङ्गात् अस्य पक्षः स्वपक्षदोषदूषित एव।

अपि च अनवधानवशादयम् अद्वैतसिद्धिटीकायामेव भगवद्देहस्य मायाकार्यत्वमङ्गीकृतवान्। अतः प्रश्नोऽयं स्वंप्रत्येव नास्मान् प्रति शोभते।





## ''अपाणिपाद'' इत्यस्य श्रुतिवाक्यस्यार्थः

विग्रहपक्षे 'अपाणिपादो जवनो गृहीता' इति श्रुतेर्विरोध इति विरोधम् उद्भाव्य तत्र ''अदुःखमसुखम्'' इत्यादिशब्दैर्यथा प्राकृतसुखस्यैव निषेधः कृतस्तथाऽत्रापि प्राकृतहस्तपादादिनिषेध एवेतिपूर्वपक्षस्य खण्डनं कुर्वद्भिः मधुसूदनैरुक्तं यदत्र ''पश्यति'' इतिशब्देन ''शब्दसाक्षित्वं, ''पश्यति'' इतिशब्देन रूपसाक्षित्वञ्च विवक्षितम् इति।। अनेन प्राकृतविग्रहनिषेधेऽपि नानध्यस्यतविवर्त-विग्रहस्य। यच्च पिशाचदृष्टान्तेन टीकाकृता परमेश्वरोऽपि जीवस्य चक्षुर्भ्यां पश्यति श्रोत्राभ्यां शृणोति इत्युक्तम् - तत्तु निर्गुणसाक्षि-विषयकत्वे अपि ''हिरण्यश्मश्रुर्हिरण्यकेश'' इत्यादि श्रुतिविरुद्धम्।

अपिच ''मुक्ता अपि लीलया विग्रहं कृत्वा भजन्ते'' इति भाष्यकारीयवाक्यतः अध्यासनिवृत्तावापि मुक्ताः बुद्धिपूर्वकमेव विग्रहे भक्तिं कुर्वन्तीति बुध्यते। अयम् अनघ्यस्तविवर्त एव विग्रहः। लीलाशब्देन च न मायाग्रहणं शक्यम्। मुक्तानां मायानिवृत्तेः। लीलाशब्दस्य मायेत्यर्थस्वीकारेऽपि तत्पदविवेको न भवति। यद्यपि विवरणाचार्येण ईश्वरस्य मुक्तप्राप्यत्वमभिहितम् तथापि मायावच्छेदा-वच्छिन्नेन ईश्वरचैतन्येन सहैव तदैक्यमुक्तं न मायया सह इतिचेत् तर्हि मोक्षस्यापि सोपाधिकत्वं भवेत्।

सभक्तरघुनाथावतारसिद्ध्यै तेन शुद्धचैतन्यस्य मुक्तप्राप्यत्वं न स्वीकृतं तच्च युक्तमेव। अपि च मुक्तानां प्रारब्धावष्टब्धविक्षेप शक्तिरपि स्वीकर्तुमशक्या (लीलाशब्देन) यतः सा च मुक्तान् बलेन विषयोपभोगे योजयति। अतो न विक्षेपशक्तिरूपि लीलापदवाच्या। वाक्ये तु लीलाशब्दः स्पष्टः। अतः सा अनघ्यस्तविवर्तविग्रह एवेति भाष्यवाक्यादपि सिध्यति।

अपि च मधुसूदनैर्याः श्रुतयः स्मृतयश्च दर्शिताः तट्टीकाकारेण च तासां यो विशेषार्थः (विशिष्टार्थः) कथितः तत्सर्वमपि निर्गुणपरम्

एवेति, निराकारब्रह्म न स्वीकुर्वतां सर्वेषां पक्षे विरोधः संभवति न त्वस्मत्पक्षे।

## विग्रहस्य नित्यत्वे आक्षेपः समाधानञ्च

**''भगवद्विग्रहो न नित्यः महत्त्वे सति रूपवत्त्वात्''**

इति मधुसूदनकृतस्तर्कः सुतरामयोग्यः। यतः स नैयायिकानामेव न तु वेदान्तिनाम्। नैयायिकमते आकाशादिवत् महत्त्वमात्रमनित्यं न अपि तु द्व्यणुकादिजन्यमनित्यम्। वायौ रूपवत्त्वाभावेऽपि जन्यमहत्त्व-सत्त्वात् वायुरप्यनित्यः। एतादृशस्य भगवद्विग्रहस्य स्वीकारः न कस्मिन्नपि मते दृश्यते।

अपि च, महत्त्वं मायायामपि विद्यते सत्कार्यवोदन च रूपवत्त्वमपि। तर्हि मायाया अपि ईश्वरपक्षे नाशः वेदान्तिभिः स्वीकार्यो भवेत्। परन्तु ईश्वरस्य ज्ञानानन्तरमपि न नाश इति शाङ्करभाष्यात् सिध्यति। अपि च, ''महत्त्वे सति रूपवत्त्वं'' इत्ययं अनित्यत्वस्य हेतुर्नास्ति। प्रत्युत मुद्गरभञ्जनादियोग्यत्वमेव हेतुः। चैतन्यमपि भगवद्विग्रहस्य भञ्जकं न, अक्रियत्वात्। मायाया अपि न भगवद्विग्रहभञ्जकत्मव् मायाकार्यविग्रहवदि शुद्धसत्त्वविग्रहस्वीकारे सत्त्वस्य सत्त्वभञ्जकत्वं नास्ति। तदन्यपदार्थभञ्जकमपि न यतस्तस्य भगवदपेक्षया तुच्छत्वात्। भगवद्विग्रहस्य भूतकार्यत्वाभावाच्च।

कर्पूरकस्तूरिकादिपदार्थाः महत्ववन्तः रूपवन्तश्च। ते स्वयं-विशीर्णाः। नैवं भगवाद्विग्रहः स्वयं निशीर्णः। यतो नैयायिकमते ते ते पदार्थाः अदृष्टादिनिमित्तेनैव नश्यन्ति। भगवद्विग्रहस्य अदृष्टजन्यत्वं नास्ति। इति मायाकार्यविग्रहवादिनामपि सिद्धान्तः। तस्य परकर्मजन्यत्वमपि नास्ति यतः -

**भगवद्विग्रहो न पाकमजन्यः**
**चेतनत्वे सति सर्वसमभोग्यरहितत्वे सति च**
**अर्धसमभोग्यत्वसाम्यात्**







इति प्रत्यक्षानुकूलतर्कस्य प्रसिद्धेः। अपि च वेदान्तविरोधमपि अविगणय्य पूर्वपक्षखण्डनमात्रप्रवणानां मधुसूदनानां गले न्यायमत विरोधोऽपि पतति। यतो न्यायमते, परमेश्वरे सुखदुःखयोः स्वरूप-योग्यताऽस्ति। परन्तु अदृष्टादि-शरीरादिनिमित्तकारणं नास्ति इति नेश्वरे सुखदुःखयोरुत्पत्तिरिति तन्मतम्। द्वाविंशतिप्रकारे दुःखे शरीरस्यापि गणना कृता। भगवद्विग्रहस्य यदि परकर्मजन्यत्वं तर्हि तस्य सुखदुःखवत्त्वमपि प्रसज्यते। परकर्मजन्यशरीरसञ्चारिपिशाचस्य शरीरताडने ताडनानुभवस्तद्वद् भगवतोऽपि भवेत्। भगवद्विग्रहस्य अत्यन्त परार्थभोग्यत्वस्वीकारे सचेतनत्वाभावेन प्रेतरूपप्रसङ्ग इत्यादयो बहवो दोषा भवन्ति। अथ ईश्वरः स्वेच्छेनैव विग्रहमुपसंहरतीति चेत् तर्हि भक्तानाम् इच्छायाः कृते दयालुः सः दययैव नित्यविग्रहं धारयतीति कथने कः प्रतिषेधः? प्रत्युत इच्छाया अपि मायारूपत्वे पूर्वोक्तो दोषो भवति। मायारहितत्वे च सा इच्छा किम् ईश्वरस्य गुणः? अनघ्यस्तविर्वर्तो वोति वक्तव्यम्।

मायायाः वेदान्तिनये ईश्वरस्य गुणत्वेन स्वीकारो नास्ति अतो न प्रथमः पक्षः। द्वितीये इष्टापत्तिः। अनयायासेनैव भगवद्विग्रहस्य अनघ्यस्तविवर्तत्वं सिध्यति।

अथ स्वयंविशीर्णत्वं भगवद्विग्रहस्य स्वभाव इति चेत् न। प्रत्यक्षानु मानवत् शाब्दप्रमेयस्य स्वभावनियमास्वीकारात्। अन्यथा मनोवेद्यत्वेन ब्रह्मणोऽपि दृश्यत्वं स्वभाव इति वक्तव्यम्। किंवा मर्त्यशरीरवत् स्वर्गस्थदेवशरीरस्यापि स्वभावः स्वीकार्यो भवेत्। अपि च ईश्वरविषये नैयायिकैः अणुशरीरवादः आकाशशरीरवादः, भूतावेशवच्छरीरवादः रामकृष्णादिशरीरवादः, इत्यादयो वादाः स्वीकृताः तर्हि नैयायिकाश्रये निलीयमानानां मधुसूदनानां मनसि किमर्थम् एतन्नायातं यत् परमाणुशरीरत्वादिना महत्त्वादिकस्य आक्षेपः न्यायमतेनैव नश्यति। परमाणु आकाशादिकं नित्यम् अतः महत्त्ववत् सर्वमपि अनित्यमिति आक्षेपः नित्यशरीरेणैव खण्डितो भवति।

विग्रहस्य नित्यत्वबोधकश्रुतिरस्माभिरन्यथा व्याख्याता इति चेत् तत् निराकृतचरमेव।

अपि च साधनव्यापकत्वे प्राकृतत्वे न उपाधिरिति यदुक्तं तत् अत्यन्त साकारवादिनं प्रति युज्यते। सावयवत्वात् विग्रहो न नित्य इति यदुक्तं तत्तु याद्व्यवहारं मुक्तेश्वराभेदवत् विग्रहनित्यत्वेन तुच्छम्। अनादिजीवप्रवाहस्य हेतोः व्यवहारसमाप्तिरपि नेष्टा। अतो भगवद्विग्रहस्य परिणामिनित्यत्वं स्वीक्रियतामिति चेत् न, विवरणोक्तमुक्तेरपि परिणामिनित्यता वाच्या भवति। एवम् अनध्यस्तविवर्तत्वेन कूटस्थनित्यत्वापातो नास्ति। लीलाया अविच्छेदेन तुच्छत्वमपि नास्ति।

एवं न्यायमकरन्दोक्त-पञ्चमप्रकारकमुक्तिवत् भगवद्विग्रहस्य तृतीयनित्यत्वमेव। तच्च वैष्णवानामिव न परिणामिनित्यत्वं, निर्गुणवादिनामिव न कूटस्थनित्यत्वम् अपितु अनध्यस्तविवर्तरूपं तृतीयमेवेति सिद्धान्तः।

विवरणकारानुसारं यावद्व्यवहारमुक्तौ सगुणोपाधिस्वीकारः मायोपाधिवशात् इति कथयतः प्रति दुर्जनतोषन्यायेन वयमभिधित्सामः यत् ज्ञानानाश्यं, प्रारब्धपातोत्तरमविनिवृत्तं जीवभ्रमानुत्पादकं च तत् मायाकार्यमिति चेत् आवयोर्वादः नाममात्रमेव। चेतनत्ववशात् प्रतिबिम्बसत्यत्वावच्छिन्नबिम्बसत्यत्वमिव कूटस्थनित्यत्वमपि विग्रहे प्राप्तमेव।

यद्यपि श्रुत्यन्तरस्य अन्यथाव्याख्यानस्य खण्डनमस्माभिः कृतम्, तथापि त्रिपादमहानारायणोपनिषदः अर्थो नान्यथाकर्तुं शक्यः, यतः अन्यलोकानामिव प्रलयस्यापि व्यावृत्तिस्तत्र कृता। सा च उपनिषद् न वेदान्तविरुद्धा। नापि अवैदिकी। मध्यमपरिणामतः अनित्यमिति टीकाकृन्मतं न समीचीनम्।

मायापक्षेऽपि सत्कार्यवादस्वीकारात् मायाया विक्षेपांशेऽपि लयस्य असिद्धेः प्रलयमन्तराऽपि कार्यस्य ज्ञाननाश्यत्वाभावे यावद्व्यवहारं नित्यत्वं सुवचम्।





अतः ज्ञातृत्वोपलक्षितनित्यत्ववद्विग्रहस्य नित्यत्वम् असंभवानीयं न। इत्यं टीकाकृन्मतम् असङ्गतम्।

## विग्रहस्य उपादानावयववादिनिरासः

अथ विग्रहस्य पादानावयवत्वं भगवद्विग्रहे न शक्यम्। ब्रह्मणः एकदेशमात्रस्य विग्रहत्वे गगनस्य आत्मनश्च एकदेशमात्रत्वात् विग्रहवत्त्वं प्रसज्येत इति मधुसूदनोक्तम् अत्र विचार्यते -

भगवद्विग्रहस्य उपादानावयवास्तित्वं नास्माभिरुच्यते यत-स्तत्स्वीकारे भूतकार्यवादप्रसङ्गः। वेदान्तिनस्तावत् मायाकार्य-भगवद्विग्रहवादिन इति मायाम् आदाय तेऽपि कथं ब्रह्मविग्रहं साधयेयुः। मनुष्यादेरिव ब्रह्मणोऽपि विग्रहकल्पने भूतकार्यवादस्यैव प्रसङ्गः।

ब्रह्मण एकदेशस्य भगवद्विग्रहत्वस्वीकारेऽपि स विग्रहः मायावच्छेदावच्छेदेन अनध्यस्तविग्रह एवेति नो मतम्। गगनादिकस्य मायाकार्यत्वेन तस्य न विग्रहसमत्वम्।

गगनादेर्व्यभिचाराद् एकदेशमात्रस्यैव सर्वथा निषेधे, गगन-ब्रह्म-पृथिवीनामपि साम्यं भवेत्।

अस्तु। अवच्छेदस्य अनवस्थावशात् सर्वमपि ब्रह्म अनध्यस्तविवर्त इत्युच्यते चेत् तन्न सम्यक्। यतः प्रतिभासावच्छिन्न-परमार्थसत्ता-निरूपक एव अवच्छेदः। अनवस्थायामपि शुद्धचैतन्यं न तथा भवितुमर्हति। शबलब्रह्माऽपि न तथा।

वस्तुतः मायावच्छेद एव एकः। इतरे सर्वेऽपि अवच्छेदाः चैतन्यस्यैव इति पूर्वोक्त आक्षेप एव गौरवदोषग्रस्त इति सर्वथा त्याज्यः।

## विग्रहस्थले मायानिरासः अनध्यस्तविवर्तत्वसिद्धिश्च



मायावच्छेदजन्यस्य अनध्यस्तविवर्तस्य स्थले मायानिरासः कथम्? इति चेत्; उच्यते। जलस्य तरङ्गाकार इव।

वायुनिमित्तेन जले तरङ्गा उद्भवन्ति। परं तरङ्गानां हस्तेन ग्रहणाय प्रयत्ने कृते जलमात्रं शिष्यति। न तरङ्गा न वा वायुः।

सर्वस्यापि जगतो परिणामित्वेन माया उपादानं, ब्रह्म च विवर्तत्वेन उपादानम्। भगवद्देहस्य तु माया निमित्तं, चैतन्यम् चोपादानम्। तत्र निवृत्तिनिमित्तं मायैव।

निमित्तं हि द्विधा अन्वयनिमित्त-निवृत्तिनिमित्तभेदात्। रथगतेः सारथिः अन्यवयनिमित्तम्। अत्र तु माया निवृत्तिनिमित्तम्। तरङ्गस्थले वायुर्निवृत्तिनिमित्तम्। तरङ्गस्पर्शेन जलमिव आलिङ्गनेन चक्रपाणिरवशिष्यति। अवशिष्टं तच्चैतन्यं नैव जडमिति सर्वदा मनसि धेयम्। जडस्थले भातित्वमस्ति। अस्तिभातिप्रिया इति अंशो ब्रह्मणोऽस्ति। सगुणे भातित्वं कथं न भवेत्? जगतो नामरूपाभ्यां वासनावृद्धिरेवेति ब्रह्मणि तन्निषेधे कृतेऽपि भगवतः शास्त्रीयनामरूपाभ्यां न वासनावृद्धिरिति न भगवन्नामरूपनिषेधः।

ननु ब्रह्मणः अतिस्भातिप्रियांशा अपरोक्षाः परं नामरूपे परोक्षे। परोक्षत्वे तदनिवृत्तिः कथमिति चेत्; न। शबलब्रह्मणः परोक्षत्वेऽपि यथाऽनिवृत्तिः तथा भगवतो नामरूपयोरपि इति बोध्यम्।

ननु भगवत इदमालिङ्गनसुखं भेदेनानुभूयते उताभेदेन? भेदेन चेत् प्रपञ्चसमस्थितिः, अभेदेन चेत् वृत्तेस्तुच्छत्वम् इतिचेत् न। आत्मविषयकचरमवृत्तिर्भेदेन भवत्युत अभेदेन? वाक्यज्ञानविषयः अभेदः वृत्तिज्ञानविषयश्च भेद इति विवेकः इति चेत् तर्हि अत्र ज्ञानं शुद्धचैतन्यमेव विषयीकरोति। वृत्त्युनभवश्च भेदम्। यन्न ज्ञाननाश्यं कथं तत् तुच्छं स्यात्? ब्रह्मणो भात्यंशे विलसन् भेदोऽयम् अनध्यस्तविवर्त एव।

## विग्रहस्य अनित्यत्वारोपखण्डनम्

अथ यदुक्तम् अद्वैतसिद्धौ - ''ननु अवयव उपादानं चेत् ब्रह्मविग्रहे नात्स्येव, एकदेशमात्रं चेद् गगनात्मादौ व्यभिचारः तयोरप्येकदेशसत्त्वात्।





न चोपादानातिरिक्तस्यैकदेशस्यैव अभावः उपादानतन्त्वन्य-हस्तवितस्त्या। परिणामस्य एकदेशस्य पटादौ अनुभवात्। गगनादौ संयागित्वादिना यदेकदेशसाधनं तदिष्टमेव। अस्माभिस्तत्र सावयवत्व-अनित्यत्वयोः अङ्गीकारात्'' इति।

अत्रोच्यते - न्यायावलम्बनेन वेदान्तस्यैव हानिः कृताऽनेन। उपादानभिन्नस्य एकदेशस्यैवाभावे, मायाः ब्रह्मणः एकदेशित्वकथनं वेदान्तिनां विरुध्येत। ब्रह्म तदन्यद्वा मायाया उपादानं नास्ति। यद्यपि माया अध्यस्ताऽनध्यस्ता अध्यस्ता चेद् अध्यासस्य निरूपकत्वाभाव इत्यादिशङ्का दुर्घटास्तथापि मायाया अध्यासकार्यत्वे शङ्कानां दुर्घटत्वम्। मायाया अध्यासरूपत्वे तु न तथा। परिणामविषयकशङ्काप्रकाराः स्वरूपविषये न संभवन्ति। मायायास्तु एकदेशित्वं पञ्चदश्यामुक्तं यथा-

**पादोऽस्य सर्वा भूतानि त्रिपादस्ति स्वयंप्रभः।**
**इत्येकदेशवृत्तित्वं मायाया वदति श्रुतिः।।** इति।।

एवं चैतन्यस्यैकदेशः यः अनध्यस्तविवर्तः स उपादानभिन्नो नास्ति इति वचनं तावद् न्यायविरुद्धम्।

यद्यपि मायासंयोगपक्षे संयोगस्य द्विनिष्ठत्वात् मायावच्छिन्न ब्रह्मैकदेश उपादानभिन्न इति वक्तुं न शक्यमिति शङ्का शक्या तथाऽपि अस्य नियमस्य समसत्ताकविषयस्थले प्रवृत्तेर्न विषमसत्ताकस्थले संयागेस्यैव संभवः।

यद्यपि विषयस्य स्वरूपाध्यासः विषयिणश्च संसर्गाध्यासः संमतः तथापि विषयिण एव विषयस्थले संसर्गः। न विपरीतः। अतः अपरसत्तास्थले परसत्तायाः संयोगो भवतु नाम। न तु परसत्तास्थले अपरसत्तायाः संयोग इति स्पष्टम्। अथवा विषमसत्तागतः संयोगो नोपादानकारणम्। तथात्वे सांख्यानामिव प्रकृतिपुरुषध्वंसस्यैव मोक्षत्वप्रसङ्गात्। अविद्यानिवृत्तेर्मोक्षत्वापत्तेः। संयोगेऽभ्युपगतेऽपि विषमसत्ताकः संयोगो न हानिकारकः।

यदा प्रातिभासिकसत्ताकवस्तुद्वययसंयोगेन न किमपि कार्यं सिध्यति अनघ्यस्तविवर्तस्य पञ्चमप्रकारवत्प्रतिभासावच्छिन्नपरमार्थसत्तावशात् मायावच्छेदनिरूपकस्य परमार्थसत्तामभ्युपगम्य शङ्काकरणं न योग्यम्।

यतु ''अन्त्यावयविनो विशेषस्यैव विग्रहवत्वमिति'' टीकाकृतो गौडब्रह्मानन्दस्य वचनम्, तत्तु न्यायशास्त्रसंमतमेव नाद्वैतवेदान्तसंमतम्। विक्षेपस्वरूपमायापक्षस्यात्र स्वीकारात्। सत्कार्यपक्षेऽपि तन्न संभवि। यत्तु ''गगनादौ संयोगित्वादिना यदेकदेशसाधनं तदिष्टमेव। अस्माभिस्तत्र सावयवत्व-अनित्यत्वयोरङ्गीकारात्'' इति सिद्धिकाराः। तदङ्गीक्रियतां नाम कामम्। परन्तु यावद्व्यवहारं मायानिवृत्तेरभावात् ईश्वरे प्राप्तैक्यानां मुक्तानामैश्वर्यं ''एवमुपन्यासात् पूर्वभावाद् अविरोधं वादरायणः'' इति सूत्रेण (4-4-7) कथितरीत्या नित्यं यथा तथा अनघ्यस्तविवर्तविग्रहोऽपि नित्य एव। ऐश्वर्यस्य ये सत्यसङ्कल्पादिका गुणाः कथिताः तेषां भेदेनैव स्फुरणं न त्वभेदेन इति तत्र अवयव-इवत्वं विद्यते। तथा अनघ्यस्तविवर्तविग्रहस्थले स्वीकारे न अनित्यत्व-संभवः।

अथ ''यत्तु आत्मनि सुखदुःखयोरित्यारभ्य अविद्यातिरिक्तप्रकृतेर-भावाच्च'' इत्यन्तस्य ग्रन्थस्य सर्वथानिराकारब्रह्म अस्वीकुर्वतां विष्णुस्वामिनां पक्षे विरोधः नास्माकं शाङ्करसांप्रदायिकानाम्। अतस्तत्खण्डने वयं न व्यापृताः। न तेन अस्माकम् अनघ्यस्तविवर्तविग्रहे दोषसंभवः।

किन्तु ''न चाविद्यायामेव व्यभिचारः तस्या अप्यनित्यत्वेन व्यभिचाराभावात्।'' इति यदुक्तं तत्र, मधुसूदनैरवधेयमासीत् यत् ईश्वरीयमायाऽपि यावद्व्यवहारं न निवर्तत इति।

अथ मायाया अविद्यायाश्च अभेदमभ्युपगम्य मायाया निवृत्तौ स्वीकृतायां, तदभेदवादि-विवरणकारेणाऽपि मुक्तप्राप्यत्वेन ईश्वरस्य-कथनात् न तदीयैश्वर्यप्रतिषेध इति भाष्यकारवाक्यसंगतिः।





अविद्यानिवृत्त्यैव मायानिवृत्त्या ऐश्वर्यस्थितौ अनायासेन विग्रहस्य चेतनस्वरूपत्वसिद्धौ अस्माकं पक्षसिद्धिः।

अपि च ''न च जीवानामपि'' इत्यारभ्य ''आत्मनोंशस्य औपाधिकतया स्वाभाविकत्वाभावात्'' इत्यन्तस्य ग्रन्थस्य अस्मदिष्ट-त्वमेव यतो वयं भगवद्विग्रहस्य अनघ्यस्तविवर्तत्वम् अभ्युयगच्छामः। अतस्तस्य उपाध्यवच्छेदावच्छिन्नत्वमस्त्येव।

अपि च अल्पकण्ठनाडीस्थले स्वप्ने ब्रह्माण्डदर्शनात्, शिलास्थले ब्रह्माण्डदर्शनस्य योगवासिष्ठे वर्णनात्, कृष्णमुखे ब्रह्माण्डदर्शनस्य श्रीभागवते, कृष्णशरीरे ब्रह्माण्डदर्शनस्य श्रीमन्महाभारते च वर्णनात् ''तथैकदेशिनः पार्थ व्यापकत्वमिहोच्यत'' इति तातपादानां ज्ञानेश्वरी वचनाच्च (12-25) भगवद्विग्रहस्य वयम् ''अंश इव अंशत्वम्'' एव मन्महे। सर्वथांऽशत्वं न। भागवतटीकाकारैरपि अंश इव अंशत्वं कथितम्।

अत एव ''एते चांशकलाः सर्वे कृष्णस्तु भगवान् स्वयम्'' इति सात्वतश्रुतिर्गर्जति। अग्रे ''त्वन्मते जीवानामणुरूपतया स्वाभाविकांशा-भावेन काल्पनिकांशस्यैव वक्तव्यत्वात्'' इत्युक्त्वा मधुसूदनैः वल्लभस्य नयनयोर्धूलिः क्षिप्ता। यतः जीवस्याणुवादेन जीवस्य स्वाभाविका अंशाः सन्ति इति वक्तुमशक्यम्। किन्तु तावन्मात्रेण ''ईश्वरस्यांशा अपि काल्पनिका एव'' इति वल्लभैः किमर्थमभिधातव्यम्?

अद्वैतसिद्धिखण्डनकारेण तरङ्गिणीकारेणाऽपि नायमंशो लक्षितः यतः तरङ्गिणीकारस्तावत् मध्वानुयायी। वयन्तु न वल्लभाः। अतः मधुसूदन-वल्लभ-तरङ्गिणीकारेषु कस्यापि हानिर्भवतु नाम नास्माकमत्र किमपि कार्यम्। अस्माकम् अनघ्यस्तविवर्तविग्रहस्य नानेन कलङ्कसंपर्क इति स्पष्टम्।

## भगवल्लोकस्य नित्यत्वम्



अथ ''अतो हि वैष्णवा लोका नित्यास्ते चेतनात्मकाः इति वाक्यस्थनित्यत्वशब्देन अवान्तरप्रलयस्थं नित्यत्वमेव बुध्यत इत्यतः

भगवल्लोकानां न सर्वथा नित्यत्वमिति'' यदुक्तं तत्तु साहसमात्रम्। यतः अस्मिन्नेव वाक्ये ''चेतनात्मका'' इत्यपि गदितम्। विषयेऽस्मिन् त्रिपादमहानाराण्णोपनिषद् सर्वथा नः प्रमाणम्। अत ईश्वरप्राप्तमुक्तानाम् ऐश्वर्यमिव भगवल्लोकानामपि नित्यत्वं सिद्धम्।

## ईश्वरस्य आवरणशून्यता साकारमण्डनञ्च

अथ तदीयटीकाकारेण यः ऐतरेयश्रुतिविरोधो दर्शितः तत्रोच्यते तया तावत् श्रुत्या आत्मनो भिन्नस्य स्थावरजङ्गमात्मकजगत एव निषेधः कृतः। न तु मुक्तप्राप्यस्य ईश्वरस्य ऐश्वर्यस्य। अपि च ''चेतनात्मका आवरणबाहुल्यशून्या'' इति भणितं शिशुमोहनमात्रमेव। तावता ईश्वरे यत्किञ्चिदावरणमस्तीति सिध्यति। किन्तु यत् किञ्चिदप्यावरणं ''नाहं ब्रह्मेति'' प्रतीतिं जनयितुम् अलम्। अथ यत्किञ्चिदावरणमिदं ब्रह्मणि शाश्वतमुत प्रतिक्षणमुत्पन्नम्? प्रथमपक्षे ईश्वरस्य अज्ञानित्वप्रसङ्गः द्वितीये च अविद्याया उत्पत्तिरभ्युपगन्तव्या भवेत् स चाभ्युपगमः अनादिषट्पदार्थवादेन विरुध्येत।

ईश्वरमायायाः शुद्धसत्त्वरूपत्वात् विक्षेपरूपत्वाद् वा आवरणरूपत्वं नास्ति इति मायाऽविद्ययोर्भेदमभ्युपगच्छतां वेदान्तिनां मतम्। उपाधेः प्रतिबिम्बपक्षपातित्वात् बिम्बभूतस्य परमेश्वरस्य आवरणाभाव इति मायाऽविद्ययोरभेदमभ्युपगच्छताञ्च वेदान्तिनां मतम्।

यद्यपि तमोगुणवन्मायायाः स्वीकारेण ब्रह्म जगदुपादानं, शुद्धसात्त्विकमायायाः स्वीकारेण च निमित्तमिति विद्यारण्यस्वामिनः, तथापि जगत् तमोगुणवन्मायायाः परिणाम इति तदवच्छिन्न-अधिष्ठानभूतब्रह्मणश्च विवर्त इत्येव तस्य तात्पर्यम्। न तु ब्रह्मणि आवरणसिद्धौ। परिणततमोंशस्तावत् जीवस्य बुद्धिमेव आवृणोति न त्वधिष्ठानस्य।

अथवा शुद्धसत्त्वनिमित्तावच्छेदावच्छिन्ने अनध्यस्तविवर्तविग्रहे तल्लोके च अस्माभिः स्वीकृते न कोऽपि दोषः।







ईश्वरे आवरणं वदन्तो वेदान्त्यपसदा बहिर्भूताः। जगदुपादान ब्रह्मणः तमोगुणवन्मायायाः स्वीकारेऽपि 'नाहं ब्रह्मास्मि' इति न तस्य विस्मृतिः अन्यथा प्रपञ्चस्य जीवोपादनत्वं प्रसज्येत। दृष्टिसृष्टिवादे मुख्यजीवस्य प्रपञ्चोपादानत्वेऽपि तत्रापि मुक्तिकांक्षारहितत्त्वादिना तस्य आवरणशून्यत्वमेवाभिमतम्।

अपि च ''ब्रह्म शुद्धचैतन्यं निर्गुणं तद्विग्रहः साकारश्च सगुणः। तत्र लीलागुणा अनध्यस्तविवर्तरूपाः जीवापेक्षिकगुणाश्च मायिकाः। शुद्धत्वेन च विग्रहोऽपि निर्गुण एवेति'' हेतोः, सर्वं मधुसूदनलपितं निरर्थकम्।

मधुराद्वैतदृष्ट्या एतावत्पर्यन्तम् अद्वैतसिद्धेः खण्डनमस्माभिः कृतम्। तथापि सर्वथा साकारवादिनं प्रति सिद्धिकारवचनं युक्तमेव।

मधुसूदनैश्च गूढार्थदीपिकायां मायारहितभगवद्देहस्वीकारेऽपि न तस्य देहस्य अनध्यस्तविवर्तत्वं कथितमिति, अद्वैतसिद्धिं विरच्य तैः गूढार्थदीपिकाया एव खण्डनं कृतमिति वचनमपि नायुक्तम्। अद्वैतसिद्धौ मधुसूदनैर्वल्लभस्य स्वस्य वा खण्डनं कृतमस्तु कामं वयं तदनुमोदामहे परन्तु मधुराद्वैतवादिनः अस्मान् प्रति वक्रदृष्ट्या वीक्षितुं न तत्सामर्थ्यमिति अवधातव्यम्।

साकारसिध्यादिग्रन्थेषु यावता प्रमाणने न साकारमण्डनं जातम् ततोऽपि महत्तरप्रमाणेन अद्वैतसिद्धौ साकारखण्डनं कृतमिति बोध्यम्। अद्वैतसिद्धिपक्षेण ज्ञानरूपतः गूढार्थदीपिकापक्षेण भक्तिरूपतश्च मधुसूदना अस्माकं पितृकल्पा एव। बालभाषया कृतस्यास्य खण्डनापराधस्य क्षमां याचे। योग्यस्यास्य खण्डनस्य द्वेषाभावात् तेऽपि आशीर्वचोभिः मामभिनन्देयुरिति मे आशाऽपि।

## भागवतात् अनध्यस्तविवर्तसिद्धिः

भागवतस्य दशमस्कन्धे महामायापरमेश्वरसंवादे अवतारसंदर्भे वर्णितं यत् महामाया यशोदागर्भे जनित्वा देवकीगर्भमधिगता। ततश्च

वसुदेवेन यशोदागृहं जगन्निवासो नीत इति। अतश्च मायाया भिन्न एव श्रीकृष्णावतारः। तस्य मायाकार्यत्वे मायायाः पृथगवतारवर्णनं नावर्णयिष्यत्। तस्याः वैष्णवमायास्वरूपकारणेन सा न पार्वती न लक्ष्मीरपि तस्याः रुक्मिणीरूपेण जातत्वात्। नापि राधिका तस्याः स्वभिन्न-निजशक्तिरूपत्वात्।

अतः विश्वमोहिनी मायैव नन्दतनयारूपेण जातेति बुध्यते ।न तस्याः स्वयं चेतनत्वम्। जडत्ववर्णनात् वेदान्ते। अतः मायागतचैतन्यस्य भगवदाज्ञारूपत्वमेव। सा च आज्ञा स्वभावतो भिन्ना सती शब्दयोगेन प्रवर्तत इति।

मायाया ईश्वराद् विषमसत्ताकत्वेन अनिर्वचनीयता, ईश्वरभिन्नता च। सा च ईश्वराधिष्ठाना ईश्वरस्फुरणरूपा वृत्तिरेव ईश्वराज्ञा। तदाज्ञानुसारमेव माया प्रवर्तते। आज्ञा सा हि मायाप्रवृत्तेः कारणमिति न मायायाः सचेतनत्वम्।

भगवतो मायाश्रयत्वमपि न वास्तवमपि तु महामायायाः कात्यायन्याः महत्त्ववर्धनार्थमेव तादृशकथनम्।

यद्वा प्रतिबिम्बरूपयोगमायया विम्बरूपचैतन्यस्य संनिधौ अवतारस्य समानयनेन नीलश्यामतनुः कृष्णरूपेण प्रकटिता। अथवा स्वभार्या न दूरं गता इति गोपानां मोहं जनयितुं योगमाया समाश्रिता। अथ योगमायायाः कात्यायनीत्यादिनामानि तावत् सर्वशक्तीनाम् उपास्यत्वेन उपदेशार्थम्।

**विष्णोर्माया भगवती यया संमोहितं जगत्।**
**आदिष्टा प्रभुणांशेन कार्यार्थे संभविष्यति।।**
**(भागवते 10-1-25)**

इत्यत्र तु विष्णोर्मायेतिकथनेन उमायाः व्यावृत्तिः, प्रभुणांशेन आदिष्टा इत्यनेन वृत्तिरूपायाः आज्ञाया बोधः, यया संमोहितं जगत् इत्यनेन अघटितघटनापटुमायाया उपदेशः, अंशेन आदिष्टा इत्यनेन च भगवच्चैतन्येन माया सचेतना जातेति बोधः भवति।





यद्यपि ब्रह्मविष्णुरुद्राणामपि सृष्टिकार्यार्थं मायादेहधारणं तथापि तदीयं कार्यं तावत् चेतनविशेषप्रेरणयैवेति बोध्यम्। व्रजे च मायाकार्यं मायाधीनगौणचैतन्यस्यैव अविद्यारूपजीवस्येव। अथ मायाया भगवदादेशः किं वृत्त्या आहोस्वित् शब्देन? प्रथमे तावत् भगवता स्वभिन्ना माया व्रजे उत्पादितेति भवति। द्वितीये च प्रकृत्यभिमानिदेवता तेन आदिष्टेति भवति। अयमेव विज्ञानभिक्षुकृतयोगवार्तिकग्रन्थस्य आशयः।

**प्रकृतिं पुरुषञ्चैव प्रविश्यात्मेच्छया हरिः।**
**क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययौ।।**

इति सर्गकाले भगवान् आत्मेच्छया प्रकृतिपुरुषौ प्रविश्य तौ सर्गार्थं क्षोभयतीति बुध्यते। अतो मायारहितैव हरेरिच्छा। सा यदा मायावच्छेदमाप्नोति तदा अनध्यस्तविवर्तरूपा भवति। तथैव मूर्तिरपि। इच्छादिकं नैयायिकानामिव आत्मगुणो न। अपि तु सुरभिस्फुरणन्यायेन मायावच्छेदेन अनध्यस्तविवर्तरूपेण प्रकटितं भवति।

यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यमयति इति बृहदारण्यकश्रुति (3-7-22) वाक्यतः स्मृतिरेषाऽविरोधिनी। श्वेताश्वतरोपनिषद्यपि-(5-1)

**द्वे अक्षरे ब्रह्मपरे त्वनन्ते। विद्याविद्ये निहिते यत्र गूढे।**
**क्षरन्त्वविद्या ह्यमृतं तु विद्या।**
**विद्याविद्ये ईशते यस्तु सोऽन्यः।।**

हिरण्यगर्भतः परे ईश्वरे अथवा परब्रह्मणि विद्याविद्ये अनभिव्यक्ते आस्तामिति कथनेन तयोरन्तःकरणधर्मत्वनिरासो बोध्यः।

अत्र क्षरमिति संसारकारणम्। अतः ईशावास्योपनिषद्गतस्य अविद्याशब्दस्य कर्मेत्यर्थमादाय कृता शङ्का न योग्या। अविद्या तावत् आवरणरूपा विद्या च सत्त्वगुणात्मिका ज्ञानरूपा। अनयोः ईशिता हि उभयोः साक्षी नियन्ता परमात्मा। परन्तु केचनात्र मुक्तजीवमेव नियन्तारं मन्यन्ते तन्न योग्यम्। मुक्तजीवस्य ज्ञाननियमनसामर्थ्याभावात्। वस्तुतः

ज्ञानमेव मुक्तं नियमयति अतो विद्याविद्ययोः स्वामी परमात्मा विभुः। सुरभिस्फुरणन्यायेन मायावच्छेदेन भगवति स्फुरणम् इच्छा। सैव मायां प्रवर्तयति। यथा मक्षिका गोस्त्वचि स्फुरणं जनयत्विा तत उड्डीयाऽन्यत्र गच्छति तथा मायावच्छेदेन इच्छा।

यद्यपि प्रकृत्यभिमानिनी देवता स्वीकृता तथा कृतयुगीयानाम् आत्मोपासकानां प्रकृत्युपासना न दृश्यते।

भगवत आज्ञा हिरण्यगर्भरूपेति हिरण्यगर्भपरव्याख्याने भक्त्या कैलास-वैकुण्ठप्राप्तिर्विरुध्यते। अतः मायायाश्चेतनत्वं नैव सिध्यति। एवं मायास्फुरणेन मथितसत्त्वात् शरीररूपेणावतारो भूत्वा ततः सृष्टिकार्यं धर्मकार्यञ्च भवति। मायाया अवतारश्च मोहकार्यार्थं भवतीति विवेकः।

यद्यपि देवीभागवते ईश्वरो मायाधिष्ठानत्वेन कथितस्तथाऽपि तत्र नतसमुद्धरणस्फूर्तिराशयः नात्र। यद्यपि देवकार्यं कृतमिति परम्परया जगदुद्धरणं जातं तथापि स्वेच्छया भगवानेव जगदुद्धरति।

मायामयदेहावतारस्य भजनेनापि मोक्षो भवतीति श्रुति-स्मृतिप्रमाणम्। कामेन भजतीनां गोपीनामपि मुक्तिर्दर्शिता भगवता। अतःस्वेच्छया शरीरधारी अनध्यस्तविवर्तरूपं श्रीकृष्णः।

## अध्यस्तानध्यस्तकार्ययोर्भेदः

धेनुस्फुरणन्यायः समसत्ताके इव विषमसत्ताकेऽपि घटते। रज्जुसर्पं वीक्ष्य रोमाञ्चः कम्पोऽपि भवति खलु। ननु रज्जुसर्पस्य अध्यस्तत्वमेव। परं कम्पादिकम् अध्यस्तम् अनध्यस्तं वा? इति चेत् ज्ञानाध्यासस्थले सर्पादिकं ज्ञानाकारं भवति तथा कम्पोऽपि ज्ञानाकारः अनध्यस्त एव। भोगः लेशाविद्यया अविद्यालेशेनेति अभ्युपगम्यते।

ज्ञानोत्पत्त्यनन्तरमपि दृढानामविद्यासंस्काराणं बलेन अन्तःकरण-गताविद्याप्रेरितवासनाद्वारा क्षुधादिकमेव अविद्यालेशजातं प्रारब्धम्। अथवा श्रुतिवाक्याद् अनुभवादपि विक्षेपांशसत्त्वेन समाधानमेतद् योग्यम्।

ज्ञानादेव तु कैवल्यमिति श्रुत्या सतामनुभूतिपरम्परया च बुध्यते।





पूर्वोक्तं कम्पादिदृष्टान्तमादाय कम्पादिकं सर्वमपि ज्ञानकार्यमेव। कस्य? सर्पज्ञानस्य।

रज्जुज्ञानेन सर्पज्ञाने निवृत्तेऽपि कम्पादिकम् आज्ञानधैर्यं तिष्ठति। अथवा कम्पादिकस्य अध्यासाद् उत्पत्तिस्वीकारे अन्यथाख्यातिप्रसङ्गः। न सा ख्यातिर्वेदान्तसंमता। वेदान्ते मिथ्याभ्रमप्रवाह एव संमतः। अनिर्वचनीया हि ख्यातिः। एवं रज्जुसर्पादिस्थले भयकम्पादिकं ज्ञानाध्यासेन यदोत्पद्यते तदा अन्यथाख्यात्या अध्यासेन विषमसत्ता स्वीकृता चेत् अधिष्ठानज्ञानेनैव भयकम्पादिनाशो भवतु। स न भवति। अतः भयादिकं सर्वम् अनध्यस्तविवर्तस्फुरणमेव।

ननु भयकम्पादिकस्य अनध्यस्तविवर्तत्वे कालान्तरे तस्य स्वयमेव नाश इव कालान्तरे श्रीकृष्णविग्रहस्यापि नाशो भवेदिति चेत्; न; मायानिवृत्तेर्यावद्व्यवहारम् अनभ्युपगमात्। जीवानाम् आनन्त्येन एकस्य मुक्तावपि इतरेषां मायाया अनिवृत्तेः। मायासत्त्वेऽपि भगवतः स्वरूपहान्यभावात् भगवान् न मायां द्वेष्टि। भगवतः इच्छाशरीरामित्यादि यद् भवति तत् सर्वं सुरभिस्फुरणन्यायेन मायापेक्षयैव इति बोध्यम्।

चैतन्यमन्तरा जडस्य स्वतः कार्यकरणसामर्थ्यमेव नास्ति इति ब्रह्मसूत्रशाङ्करभाष्यसिद्धान्तः। परन्तु चैतन्यस्य स्वयम् अक्रियत्वात् तत् कथं वा जडं कर्मणे प्रवर्तयेत्? अक्रियेन चैतन्येन सह जडस्य संयोगे क्रिया भवतीति चेत् तदनध्यस्ततैव युक्ता। अन्यथा जडस्य जडेन सह संयोगे कथं जडे क्रियाया अभावः? जडसंयोगेन इच्छाद्युत्पत्तिः यदि चेतनस्य स्वरूपयोग्यधर्मः तर्हि अत्र विशेषेण मायावच्छेदेन चैतन्यमेव सद्धर्मरूपम् अनध्यस्तविवर्तविग्रहम् आधत्ते इति योग्यम्। इच्छादेः जडधर्मत्वेऽपि माया कथं चैतन्यं प्रवर्तयेत्? तथात्वे तु चेतनकारण-त्ववादः सर्वोऽपि निरर्थकः स्यात्। अतः इच्छायाः आत्मगुणत्वाभावेऽपि ईक्षणं सुरभिस्फुरणन्यायेन मायावच्छेदेन ईश्वरे भवेत्। तद् ईक्षणं सा च लीला अनध्यस्तविवर्तरूपैव। तथापि श्रुतौ

रजोगुणावच्छेदो नास्तीति परमेश्वरे द्वेषदुःखाद्यनिष्टगुणानां स्वरूप-योग्यता नास्तीतिकारणेन नैयायिकमतस्य व्यावृत्तिः।

मायावच्छेदेन चैतन्ये जातं स्फुरणं न ज्ञाननाश्यमिति नः अनुभवः। एवं भगवद्विग्रहस्य न मायाकार्यत्वम् इति सिद्धान्तः।

## मायाजन्मनो रहस्यम्

यद्यपि श्रीमद्भागवते -

**विष्णोर्माया भगवती यया संमोहितं जगत्।**
**आदिष्टा प्रभुणांशेन कार्यार्थे संभविष्यति।। (10-1-25)**

इति - अंशेन मायोत्पत्तिर्वर्णिता। तथाऽपि सा केनांशेन? रजस्तमः प्राधान्ये तस्या अविद्यात्वमेव न मायात्वम्। अविद्याया उपासना केनाऽपि कं प्रत्यपि नोपदिष्टा। तस्याः भद्रकालीत्याद्यभिधानानि स्वयं भगवता कथितानि। अतः सत्त्वांशेनोत्पन्नेति वक्तव्यम्। तर्हि तदपेक्षया भगवद्विग्रहस्य अनध्यस्तविवर्तत्वं वरम्।

अपि च माया जातेत्यादिवर्णनेन चेतनक्रिया कथिता। परन्तु सांख्यवेदान्तयोः मायायाः जडत्वं कथितम्। द्वैतवेदान्ते मायायाः सचेतनत्वेऽपि भागवताद्वैतप्रमाणेन मायायाः जन्मनो रहस्यमेवं वक्तुं शक्यते। मायाप्रधानः भगवदंशः विशेषेण देवीशरीररूपेण जातः। सर्वपुराणेषु सर्वदेवीनां प्रकृतिसंज्ञा प्रसिद्धा। अतः देवी वा, सृष्टिकार्यार्थं मूर्तित्रयं वा मायाकार्यविग्रहं स्वीकुर्वन्तु नाम भगवद्विग्रहस्तु न मायाकार्यमेव। अनध्यस्तविवर्तत्वमेव तस्य।

श्रीरामावतारे साक्षान्महालक्ष्मीः सीता जाता। श्रीरामावतारो न मायाकार्यम्। दुर्जनतोषन्यायेन तस्य मायाकार्यत्वस्वीकारेऽपि श्रीकृष्णावतारे तन्न घटते। अतः श्रीकृष्णावतारः अनध्यस्तविवर्त इति भागवते। एतद् यस्य न प्रमाणं न तैः सह वयमभिलपामः। अस्माद् विश्वासेन नारायणोऽस्मान् सर्वतः पातु।







## अवताराधिक्षेपः तत्खण्डनञ्च

ननु अवतारसमर्थने एतावता प्रयासेन किम्? एतदपेक्षया अवतारस्य निराकरणं वरम् इति चेत्?

न। दयालुः परमेश्वरः अस्माकं विषयप्रीतिमेव भक्तिरूपेण परिणमय्य अवतारविग्रहम् अस्मभ्यं दर्शयति। न वयम् अनुमानैकशरणाः अपि तु अनादिकालतोऽस्मान् ज्ञानदुग्धेन परिपोषयन्त्या श्रुतिजनन्या यत्र नीयामहे तत्र निमीलितनेत्रा निःशङ्कं यामः। तेन परब्रह्मणा स्वरूपं देवेभ्यो दर्शितमिति तावत् तलवकारश्रुतिः -

**ब्रह्म ह देवेभ्यो विजिग्ये। तस्य ह ब्रह्मणो विजये देवा अमहीयन्त। त ऐक्षन्त अस्माकमेवायं विजयोऽस्माकमेवायं महिमेति। तद्धैषां विजज्ञो। तेभ्यो ह प्रादुर्बभूव। तन्न व्यजायन्त किमिदं यक्षमिति।। (केनोपनिषद् 3-)**

उपासकानां कार्यार्थं ब्रह्मणः रूपकल्पनाऽपि श्रूयते -

**चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः।**
**उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना।।** इति।।

भगवद्गीतायाम् -

**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्।**
**प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया।।** इति च।।

भगवतो दयालुत्वात् नास्माकं मनसो भगवदवतारनिराकरणे प्रवृत्तिः अस्माकं दुःखेऽपि भगवान् निग्रहवानपि नास्मान् तत्र कर्षति अपितु स्वकृपया अस्माकं प्रेमानुसारम् अवतारं प्रदर्श्य अस्मान् पूर्णतां प्रति नयति।

स्वयं भगवताऽयमभिप्रायः गीतासु कथितः -

**तेषामहं समुद्धर्ता मृत्युसंसारसागरात्।**
**भवामि न चिरात् पार्थ मय्यावेशितचेतसाम्।।**

इति (12-) एवं श्रुतियुक्त्यनुभवबलेन अवतारः सिध्यतीति, अवतारानभ्युपगमस्य अयुक्तत्वात् अवतारशरीरस्य भूतकार्यत्व कथनस्यानिष्टत्वात्, पूर्वसमीक्षणेन अवतारशरीरस्य भूतकार्यत्वस्य असिद्धेश्च भगवद्विग्रहः अनध्यस्तविवर्तः सर्वजनसेव्यश्च सिध्यतीति तात्पर्यम्।

## परमेश्वरशरीरावेशखण्डनम्

''एवं हि अवतारशरीरखण्डनेन श्रुत्यादिविरोधो दुष्परिहारः। अथ भूतावेश इव परशरीरे, ईश्वरस्यावेश'' इति चेत् तर्हि ईश्वरस्य सर्वान्तर्यामित्वेन सर्वत्र पूर्णप्रवेशो वक्तव्यः। अनुप्रवेश इति चेत् ईश्वरस्य जीवत्वप्रसक्तिः। जीवत्वे च अज्ञानित्वम्। तदा तत्कृतवेदस्याप्रामाण्यम्। श्रुतिमन्तरा ज्ञानानुत्पत्तेः। ज्ञानमन्तरा च नाज्ञाननाश इति स्पष्टम्।

अथ परशुरामवत् भगवद्विग्रहस्य आवेशावतार इति चेत् ततश्च पूर्णावतारस्य भिन्नता भागवतादिशास्त्रेषु निगदिता। पूर्णस्याप्यावेशे तच्छरीराश्रितजीवानां न भोगसंभवः। प्रेते यदि पूर्णावेशः कथितस्तर्हि कर्म विना कथं भौतिकशरीरे आवेशः? अंशत्वम् आभासवत्। अथवा केवलशक्तिः। पूर्णत्वस्य आभासो न केनापि दृष्टः। स्वशक्त्या यदि प्रेते पूर्णावेशस्तर्हि नूतनदेहग्रहणे कः प्रत्यवायः? इत्यतः भगवद्विग्रहो न कदाचिदपि अनिर्वचनीय इति सिध्यति। स च परमानन्दस्वरूपः। न्यायमकरन्दकारस्य पञ्चमकल्पितनिवृत्तिरिव अस्माकं मते भगवद्-विग्रहस्य पञ्चमप्रकारत्वमेव।

अप्रसिद्धिदोषग्रस्तत्वात् न्यायमकरन्दकारमतं न पुरुषार्थसाधकम्। अस्माकन्तु कल्याणनिधानं भगवान् श्रुतिस्मृतिपुराणेषु प्रसिद्धः। मयाऽयं विषयः नानाग्रन्थेषु सयुक्ति निरूपितः। ज्ञानानन्तरमपि अवतारसत्ता गोपिकादिसाधूनामनुभूतिविषयः इत्यतः भगवद्विग्रहस्य पञ्चम-प्रकारत्वकथने न कोऽपि दोषः। यथा मुक्तौ ज्ञातत्वोपलक्षणताया तथा भगवद्विग्रहस्य नित्यत्वे न कोऽपि विरोधः। न च द्वैतापत्तिः।







अनध्यस्तविवर्तत्वात्। कनकभूषणं कनकज्ञानेऽपि न खलु नश्यति। कनकमेव केनचित् कर्मणा भूषणत्वं भजति न तथा भगवति कर्मसंभवः। रजोगुणजन्या क्रिया बिम्बभूते कथं शक्या?

अतः प्रतिबिम्बापेक्षिक-बिम्बत्वारोपावच्छिन्नः अनध्यस्तविवर्तः भवगद्विग्रहः। बिम्बभूतं ब्रह्म निष्कलङ्कम्। अनध्यस्तविवर्तं च साकारम्। कनकं शुद्धं निराकारं भूषणञ्च अनध्यस्तविवर्तं साकारमिति तत्त्वम्। भूषणस्य गुणा इव भगवतोऽपि दयादि गुणा अनध्यस्तविवर्तरूपा एव।

ननु ब्रह्म अत्यन्तं साकारमिति तन्न। निर्युक्तिकत्वाद् उपेक्ष्यमेव तत्। अतो मधुसूदनैरपि गूढार्थदीपिकायां भगवद्विग्रहस्य अनध्यस्त-विवर्तत्वमुक्तम्।

एकस्या एव सत्तायाः पारमार्थिकत्वेऽपि प्रतिभासारोपावच्छिन्नानां प्रकाराणामनेकता।

अनेकजीवानाम् आभासत्वेन एकजीवाभासस्य मुक्तावपि भगवान् स्वशरीरमुपसंहरेदिति न संभवति। अतः दयालुः सुन्दरः उदारश्च स एव गोपिकावरः जीवभावेन सर्वैः संसेव्यः।

## श्रीकृष्णस्य रामापेक्षया गौणत्वस्य खण्डनम्

अतः -

**सर्वज्ञः सर्वशक्तिः सर्वात्मा ईश्वर अनुभवरूपः।**
**बिम्बभूतः कृपालुः आर्यपुत्रो मम हृदि सदा पूज्यः।।12।।**

तस्याप्यंशत्वे स कस्यांश इति निरूपणीयम्।

ननु दृष्टिसृष्टिवादेऽपि सिद्धः सर्वज्ञत्वादिविशिष्ट ईश्वरस्तवापि अभिमतः अस्माकमपि अनध्यस्तशरीररूपेण सेव्य एव। परन्तु स अंशावतार एव विष्णुपुराण-भागवतादिपुराणप्रमाणात्। श्रीरामापेक्षया च श्रीकृष्णचरितस्य गर्हणीयत्वम् इति चेत्; न। एकपत्नीव्रतत्वादि-

कारणेन यदि श्रीरामस्य श्रीकृष्णापेक्षया वरीयस्त्वं तर्हि अहिंसादिव्रतापेक्षया बुद्धस्य श्रीरामापेक्षया वरीयस्त्वं वक्तव्यम्। बुद्धस्योपदेशेषु विप्रलिप्साकारणेन न तस्य वरीयस्त्वमिति चेत् तर्हि श्रीरामापेक्षया भरतस्य वरीयस्त्वं भवेत् परन्तु भरतोपासनाशास्त्रमेव क्वचिदपि नोपलभ्यते। सर्वं रामोपासनाशास्त्रमेव। तत्रापि पृष्ठतो वालिवधादिकारणेन श्रीरामस्य चरित्रे क्वचिदाक्षेपः श्रूयते न तथा भरतचरित्रे।

बुद्धस्योपदेशेषु विप्रलिप्सेति वचोऽपि अयुक्तम्। स्वबुद्धध्या तथा वक्तुं न शक्यते। स्वयं यथार्थज्ञानमन्तरा अन्यस्य विप्रलिप्सावचनम् अशक्यम्। एवं बुद्धागमाद् बुद्धवचनस्य विप्रलिप्साप्रयुक्त्वं न सिध्यति। वैदिकवाक्यात् साध्यत इति चेत् तर्हि नैतिकाचरणेन तस्य विप्रलिप्सात्वं अनैतिकाचरणेनाऽपि श्रीकृष्णस्य न तथात्वमिति बोध्यम्। कृष्णगोपालतापनीयाद्युपनिषत्सु प्रमाणमुपलभ्यते।

पुनः कृष्णलीलाया अनैतिकत्वं तव मनासि कुतो भाति? तव नास्तिकत्वाद् आहोस्विद् आस्तिकत्वात्?

प्रथमपक्षे तन्न युज्यते। तव नास्तिकस्य मते अङ्गनालिङ्गनादिजन्य सुखस्य पुरुषार्थत्वात् श्रीकृष्णस्य मोक्षप्राप्तिरिति भवति। द्वितीयपक्षे च श्रीकृष्णस्य परमेश्वरत्वस्य श्रुतिसिद्धत्वात् न सा शङ्का प्राप्तावकाशा।

ननु सर्वं कर्म नियतं फलवद् भवति इति चेत्; न। तत् कुतः प्रत्यक्षतः अनुमानतः आगमतो वा? न तावत् प्रत्यक्षतः चार्वाकेण प्रत्यक्षप्रमाणे स्वीकृतेऽपि तत्र कर्मणः फलनैयत्याभावात्। नानुमानतः चार्वाकदर्शने तदस्वीकारात्। कर्म अस्वीकुर्वताम् अन्येषाम् अनुमानवादिनां मतेन हेत्वन्तरोपस्थापने सत्प्रतिपक्षप्रसङ्गः। नाप्यागमतः आगमेषु श्रीकृष्णस्य कर्मफलावचनात्। ननु परमेश्वरशरीरस्य सत्त्वमयत्वनियमेन तत्र सात्त्विकस्वभाव एव अपेक्ष्यते न तु गोपीसंगादिराजसस्वभाव इति चेत्;

न। सत्त्वस्वरूपे शास्त्रमेव प्रमाणम्। अन्यथा यमरूपयोगाङ्गेनैव सर्वयोगसंप्राप्तौ नान्ययोगापेक्षा। अथवा अन्ययोगस्य यमरक्षण





मात्रकार्यत्वे यावत्समाधियमरूपयोगाङ्गस्य अपूर्णता ततश्च यमस्य गुणापेक्षयैव शास्त्रप्रवृत्तिर्न तु गुणानपेक्षया इति भगवद्गीताभाष्ये भगवत्पादाः (10-41)। तथापि अस्य वर्णविचारप्रकरणत्वेन आचार्यवचनं प्रवृत्त्यनुमापकं न तु ईश्वरसत्त्वग्राहकम्। अन्यथा आचार्यवचनविरोधः।

अहिंसादिपञ्चानामपेक्षया सत्त्वस्य नीतेर्वा उत्कृष्टलक्षणं त्वयाऽपि कर्तुमशक्यम् परन्तु मिश्रसत्त्वलक्षणमेतत् न शुद्धसत्त्वलक्षणम् तथाहि विवेकचूडामणौ -

**मिश्रस्य सत्त्वस्य भवन्ति धर्मास्त्वमानिताद्या नियमा यमाद्याः।**
**श्रद्धा च भक्तिश्च मुमुक्षुता च दैवी च संपत्तिरसन्निवृत्तिः।।(120)**

इत्यनेन मिश्रसत्त्वस्य दुर्गुणराहित्यादि-दैवीसंपत्तिः कथिता।

ननु आचार्याणां वचनं प्रमाणं चेदपि जननीं विना शङ्कानिवारणं कःकुर्यात्? मिश्रसत्त्वं नाम गुणद्वययुक्तम्। शुद्धसत्त्वं नाम गुणद्वयाभिभूतम्। मलिनसत्त्वं नाम जीवप्रतिबिम्बितम्। इत्येवं विद्यारण्यस्वाभाभिः तत्त्वविवेके विवृतम्। तर्हि सर्वस्मिन् अपि जीवे अमानित्वादिगुणगणाः किमर्थं न भवन्ति? इतिचेत्।

सत्यं त्वं चतुरहृदयोऽसि। त्वया विचारितमेतद् अद्ययावत् केनापि न समाहितम्। तथापि मूलश्लोके षष्ठीव्यपदेशेन अमानित्वादिगुणानां धर्मत्वं कथितम्। धर्मिभूतमिश्रसत्त्वे प्रतिबिम्बितो जीवः मिश्रसत्त्वस्य अमानित्वादिधर्माणां साधकः। धर्मधर्मित्वमित्युभयमपि मिथ्या। अविद्ययैव तद् भासते। तदभासने तद् देवीगुणसाधने प्रवृत्तिर्न स्यात्। अतो मायायाः एव कृपेयम्। आत्मभिन्नप्रतीतिः सर्वाऽपि भ्रान्तिस्तथाऽपि धर्मधर्मिप्रवृत्तिः वाग्व्यवहारार्थमेवेति बोध्यम्। अपिच मिश्रसत्त्वस्य गुणानां साधको जीवः अतः स सेवकः। शुद्धसत्त्वोपहितश्च श्रीहरिः सेव्यः। रजस्तमोगुणयोः न्यूनाधिकप्रमाणेन जीवेषु बद्धसाधारण-मुमुक्षुजीवव्यवहारो भवति। अष्टावक्रगीतायामपि -(16-)

**प्रवृत्तौ जायते रागो निवृत्तौ द्वेष एव हि।**
**निर्द्वन्द्वो बालवद् धीमान् एवमेव व्यवस्थितः।।**

इति कथितम्।

कर्तृत्वबुद्ध्या क्रियमाणं सर्वमपि बन्धकारणम् सुकृतं दुष्कृतं वा। यस्य जडे शरीरे आत्माहंकृतिस्तस्य प्रवृत्त्या राग; निवृत्त्या च द्वेषो भवति। अत एव मुक्तो निर्द्वन्द्वा भूत्वा बालवद् भवति अर्थात् देहबुद्ध्या दासवद् भवति। धीमान् नाम अन्तर्ज्ञानवान् भवति।

**हातुमिच्छति संसारं रागी दुःखजिहासया।**
**वीतरागो हि निर्दुःखस्तस्मिन्नपि न खिद्यति।।13।।**

यस्तु रागी स दुःखजिहासया संसारं हातुमिच्छति। वीतरागस्तु निर्दुःखः। रागोत्थदुःखरहितत्वादस्मिन् संसारे सत्यपि न खिद्यति न खेदं प्राप्नोतीत्यर्थः।

संसारप्राप्तीच्छा महारागः। संसारजिहासा रागः। दुःखप्रहाणेच्छा-ऽनुरागः।

**रागेन महारागं जेतुमिच्छन्ति केचन।**
**वीतरागस्तु संसारे भवन्नपि न खिद्यति।।14।।**

जीवो भक्तिबलेन रागं जयति। परमेश्वरं प्रति प्रीतिभरितमानसे द्वेषवृत्तिर्न भवति। रागे सति द्वेषः। स तु रजोगुण एव न सत्त्वगुणः।

## श्रीकृष्णजारत्वखण्डनम्।

अथ अनेकगोपीसंगमतः श्रीकृष्णस्य जारत्वमिति चेत् तत्रोच्यते-भगवान् एकशरीरेणैव सर्वगोपीनां भोगं भजति चेदयं दोषः परन्तु विभिन्नदेहैः प्रत्येकं गोपीकृते भोगं दर्शितवान्। एकजीववादे मातापितृसंयोगेऽपि पुत्रस्य मातृगमनदोषो भवेत्। तथाऽपि देहभेदेन न दोषप्रसङ्ग इति बोध्यम्। अपि च एकस्यैव जीवस्य अनेके जीवाभासास्तथैव एकस्य श्रीकृष्णस्य अनेके श्रीकृष्णाभासा इत्यपि वक्तुं सुशकम्।







श्रुतिविरुद्धत्वेऽपि वाचस्पतीनाम् अनेकेश्वरवादस्य, वादि-समाधानार्थमत्र स प्रदर्श्यते चेदपि न दोषः तव संशयवादस्यापि कुत्र यथार्थत्वम्? मिथ्याशशशृंगेण मिथ्यावन्ध्यापुत्रस्य अपसारणमिव तद् भवेच्चेत् का हानिः? लीलाविनोदमात्रमेव। अतोऽस्माकं भगवति दोषदर्शी दोषभाक् भवति।

वाचस्पतिमते प्रत्येकम् ईश्वर एव तथा अनेकदेहेषु प्रत्येकं श्रीकृष्ण एव। लीलास्त्रीभोगेऽपि स स्वतन्त्र इति कथं वा जारत्वम्? पतिसेवा स्त्रीधर्मःखलु। तत्र पतिर्नारायणरूपेण सेव्य इति शास्त्रवचनम्। न तु पतिर्जीवभावेन सेव्य इति। श्रुतिविरुद्धत्वात्। एवम् ईश्वरभावेन पतिसेवने पतिदेहविशिष्ट ईश्वरो भोक्ता इत्येव पतिव्रता मन्यत इति प्राप्तम्।

## श्रीकृष्णस्य माधुर्यालम्बनत्वं पूर्णत्वञ्च।

अत्रेदं रहस्यम्। साक्षात् श्रीकृष्णे अज्ञातभक्तिमाधुर्यं तारकं भवति। अन्यत्र तु ज्ञातमाधुर्यमेव। ज्ञातमज्ञातञ्चेति उभयमपि वस्तुतः श्रीकृष्णचरणयोरेव तथापि अज्ञातमाधुर्यभक्तिः प्रधाना श्रीकृष्णे। यद्यपि श्रीरामेऽपि तथा अगस्त्यादिना वर्णितं तथापि जन्मान्तरे श्रीकृष्णरूपेण मुनीनामिच्छा पूर्णतां नीत्येत्येव कृष्णोपनिषदि श्रूयते। तदनुसारमेव अगस्त्यसंहिता नेतव्या। अज्ञातमाधुर्यं नाम ईश्वराज्ञानपुरःसरं पतौ विहितसेवाफलम्। सा सेवा यदि श्रीकृष्णे विहिता तर्हि फलमुत्कृष्टं भवति। एतदेव भागवते परीक्षिन्महाराजेन पृष्टेन शुकमुनिना अन्यत्र उद्धवेन च गदितं श्रूयते -

**कृष्णं विदुः परं कान्तं न तु ब्रह्मतया मुने। (10-29-12)**

इति।

**तन्वीश्वरोऽनुभजतोऽविदुषोऽपि साक्षात्।**
**श्रेयस्तनोत्यगदराज इवोपयुक्तः।।** इति च।।

एवं ज्ञानेन अज्ञानेन वा कृतं श्रीकृष्णप्रेम फलदमेव। अज्ञानेनापि कृते श्रीकृष्णसामर्थ्येनैव ज्ञानकृतप्रेममाधुर्यं लभ्यत इति।

भक्तचरित्रे काचन कथा भवति। काचन राजकुमारी श्रीकृष्णं पतिभावेन सेवते। तज्ज्ञात्वा कश्चन जारः श्रीकृष्णवेषेण तामुपसरति। सा च तं कृष्णमेव मन्यमाना तेन रमते। वृत्तान्तमिमं विदित्वा राजा तं जारं यदा काराबद्धं करोति तदा श्रीकृष्णकृपया स मोचितो भवति। सा च कन्या श्रीकृष्णस्यैवादेशेन तस्य जारस्य पत्नी भवति। एवं श्रीकृष्णस्य प्रकटावताराभावकालेऽपि तस्मिन् माधुर्यभक्तिः श्रेष्ठा।

आस्तामियं तावत् प्रासङ्गिकी कथा। अत्र ''गोपिका आर्यपथं विहाय वेदविरुद्धमार्गं भजत इति'' केनचिदुक्तं, तन्न युक्तम्।

**''या दुस्त्यजं स्वजनमार्यपथं च हित्वा''** इत्यस्य वाक्यस्य
**''भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम्''**

इत्यनेन वाक्येन सह समन्वये कृते ज्ञायते यत् - आर्यपथ-परित्यागेऽपि तया आर्यपथफलं प्राप्तमिति। तच्च श्रुतिभिरपि विमृग्य-गोविन्दपदवीरूपम्। अतो गोपिकानामयं मार्गः म्लेच्छ-बौद्ध-जैन-शाक्त-शैवादिकानां मार्ग इव सुतरां न भवति। अत्र वेदवद् भागवते भगवत आज्ञा दृश्यते यस्य खण्डने आचार्यसदृशानामपि जिह्वा न प्रवृत्ता।

योगिनोऽपि कान्तासङ्गेन क्षयो निश्चितः। योगी कायव्यूहेन पृथग्देहान् धृत्वा एकस्मिन्नेव जन्मनि प्रारब्धमनुभोक्तुं शक्नोति। श्रीकृष्णस्तु गोपिकानामिच्छया अनेकदेहान् धरतीति किमत्र चित्रम्?

योगी एतावत्या अनीत्याऽपि मोक्षं प्राप्तुमर्हति चेत् ईश्वरस्य विषये को बाधः?

ननु ईश्वरः सदासत्त्वचित्तः मुक्तस्तु पापप्रारब्धमिश्रित इति चेत् तदयुक्तं यावत् पापप्रारब्धं तावन्न जीवन्मुक्तिः। अतएव अरिहन्ता अत्यन्तपुण्यदेह इति जैनमतम्। तस्य अनन्तशक्तित्वेऽपि दयालुत्वेऽपि उपदेशमात्रप्रदत्वमेव नतु कर्मविच्छित्तिः तस्य वीतरागित्वात्। सहजां







शकितमन्तर्लाप्य उपदेशबलेन बोधयतीति कीदृशं दयालुलक्षणम्? कर्म बन्धहेतुरिति जैना वदन्ति। तदेव कर्म कर्मनाश्यमित्यपि त एव भणन्ति। अरिहन्ता सर्वशक्तिमांश्चेदपि मोहाभावात् जनान् मोचयेत् कथम्? तर्हि उपदेशानर्थक्यम्। जनानाञ्च अमोक्षप्रसंगः। कर्मणो बन्धहेतुत्वमिति चेत् तर्हि अरिहन्तृकर्म कथङ्कारं नश्येत्? अरिहन्तुः इतरेषां मोक्षे सर्वशक्तिप्रवृत्तिश्चेत् भक्तानामिच्छानुसारं भक्तिफलप्रदानेन भक्तिविस्तारः किमर्थं न कार्यः? एतत् तावत् सामर्थ्यं श्रीकृष्णादन्यत्र वृथाभिमानिनां न संभवति।

## योगाङ्गयमानाम् अत्यन्तदुर्घटत्वम्

यमानामेवोदाहरणेन न कस्यापि आत्यन्तिकत्वमस्तीति बोद्धुं शक्यते। यथा अहिंसाविषये - यद् ग्रासमाश्रित्य बहवः पिपीलिकादयो जीवन्ति तद् ग्रासं पिण्डपोषणार्थी तेभ्यः समाकृष्य खादन् हिंसां नाचरति किम्? न खादति चेदपि आत्मघातवशाद् हिंसा अपरिहार्यैव। साऽपि न धर्मशास्त्रसंमता। एवं ग्रासस्य भक्षणेऽभक्षणेऽपि हिंसैव घटेत। इयमेवास्था सत्यादिषु। असत्यं पातकं, परन्तु हिंसात्मकं सत्यं तु महापातकमिति महाभारते बोध्यते। ब्रह्मचर्यविषयेऽपि-मैथुनज्ञानं विना ब्रह्मचर्यपालनं कथम्? किं तन्मैथुनं संमेलनमात्रं, उपस्थयोनि संयोगः योनौ शुक्रपातो वा? नाद्यम् असिद्धेः। पितुः पुत्र्याश्च तत् प्रसिद्धम् द्वितीयपक्षोऽपि अतितराम् असिद्धः। जन्मकाले सर्वस्यापि तथा संयोगसत्त्वात्। तृतीये पक्षे तु श्रीकृष्णस्य ऊर्ध्वरेतस्त्वात् कथं शुक्रपतनम्? रासक्रीडया कस्या अपि गोपिकाया गर्भप्राप्तिः क्वचिदपि न श्रुता। अपरिग्रहः चौर्यमिति द्वयमपि एवमनैकान्तिकतां भजतीति नात्रैव अतिविश्वासः करणीयः।

## रासक्रीडा-रूपकत्व-खण्डनम्

भागवते समुपवर्णिताया रासक्रीडायाः रूपकत्वं केचन समुपदिशन्ति तन्न युक्तम्। ऐतिह्यं मत्वा रूपकीक्रियते चेत्

काव्यमात्रता आनर्थक्यञ्च भवेताम्। ऐतिह्यमपहाय रूपकमात्रग्रहणं न योग्यम्।

अपि च रासक्रीडातः वेदान्तनिरूपणं वेदान्तिनमन्तरा कः कर्तुमीष्टे? वेदान्तिनं प्रति रूपकद्वारा वेदान्तोपदेशः किमर्थं कार्यः?

उपनिषद्वाक्यानि परित्यज्य न कस्यचिद् द्विजस्य विरक्तिः मुक्तिश्च संभवतः। यश्च स्वयं साधनचतुष्टयसंपन्नस्तस्य वेदान्तवाक्येभ्य एव स्पष्टबोधो भवति। यस्त्वनधिकारी तस्य स्पष्टवाक्यैर्यदि न बोधस्तर्हि कथङ्कारम् अस्पष्टवाक्यैर्भवेद् बोधः?

विरक्तःकामपरवचनानि नावलोकते। बद्धश्च वेदान्तवाक्येभ्योऽपि कामपरतामादत्ते। तर्हि वेदान्तरूपकतः कामक्रीडावर्णनस्य प्रवृत्तिर्भगवतो वेदव्यासस्य कुतो जाता? आप्तस्य मिथ्योपदेशः न केनाऽपि प्रमाणेन सिध्यति। भगवता वेदव्यासेनाऽपि स्वकृतब्रह्मसूत्रैः श्रीकृष्णाचरणं न खण्डितम्। अतो भागवतप्रसङ्गस्य मोघं रूपकत्वं कथयन् अनाप्तत्वं भजसि। ये चाऽपि शुकादिमुनयः विषयान् विजित्यैव जाताः तेऽपि भगवन्माहात्म्यवर्णने परवशा जाताः। भागवतमिति पारम्परिकं प्रमाणं, रूपकस्य उपासना केन निर्दिष्टा? रूपकस्य कृते न कोऽपि प्राणांस्त्यजति किन्तु श्रीकृष्णस्य कृते प्राणानपि जहुरिति भक्तिमालायां बहुधा वर्णितम्। एवं भगवद्वर्णनं रूपकमिति कथनेन इतिहासस्यैवान्यथात्वं भवेत्।

ब्रह्मसूत्रेष्वपि रूपकमित्युक्त्वा प्रकृतिखण्डनं कृतम् न तथा कृष्णस्य खण्डनम्। एवं श्रीकृष्णचरितस्य रुपकत्वे प्रेमभरवृत्तान्तवर्णनं वृथा भवेत्। तव रूपकपक्षः अस्माकञ्च इतिहासपक्ष इतिचेत् असिद्धिदर्शनेन वयं रूपकपक्षं निरस्यामः। पुरञ्जनाख्यानवदपि अस्य न रूपकत्वम्। सर्वस्यापीतिहासस्य अपलापे तव पित्रोरपि अपलापो भवेत्। अतः रूपकप्रतापेन असद्द्यूतक्रीडां मा कार्षीः।

**तद्रूपकमभेदो य उपमानोपमेययोः॥**

इति काव्यप्रकाशोक्तरूपकलक्षणेन विचार्यते यत् पूर्वमुपमानोपमेययोरसिद्धौ कस्य रूपकं भवेत्? वन्ध्यापुत्रादीनां रूपकत्वं साहित्यशास्त्रेऽपि वर्जितमेव। काव्यानन्दस्य कृते इतिहासस्य रूपकत्वे दिदर्शियिषितेऽपि न तस्येतिहासत्वलोपः।







अपि च भागवतादपि न रूपकस्य सिद्धिः। अनेकयोगमायया ''रूपाधि धारयति माधव'' इति रासपञ्चाध्यायीतः प्रथमश्लोके वर्णितम् आरोपवशात् स्वयं रूपकमपि मायारूपम्। किन्तु यदि माया स्वयम् इतिहासस्तर्हि कथं तत्र रूपकावकाशः? रूपकं हि नाम व्यावहारिकसत्तायाः प्रातिभासिकं रूपम्। यथा मुखस्य चन्द्रस्य च व्यावहारिकसत्तायां मुखचन्द्र इति रूपकं प्रातिभासिकम्। अपि च प्रातिभासिकी एव यत्र कथा कथं वा तत्र रूपकसंभवः? स्वाप्न-रज्जुसर्पभ्रमे यदि भिन्ना प्रातिभासिकसत्ता कथिता तर्हि सा चतुर्थी भवेत्। न तथा संप्रदायः। शाश्वतकोशेऽपि मायायाः करुणा लीला चेति अर्थद्वयं प्रदर्शितम्। अर्थद्वयेऽपि कथं रूपकत्वसंभवः? लीलायाः रूपकत्वं कपिचेष्टायते। लीलाया एव स्वीकारे पुनस्तस्याः कथं रूपकता? तथात्वे च लीलास्वरूपभङ्गप्रसङ्गः।

इतिहासस्य यथार्थत्वे न तस्य रूपकता। अयथार्थत्वे च न किमपि रूपककथनप्रयोजनम्। अपि च यस्य वेदान्तवाक्येभ्यः स्पष्टबोधः तस्य रूपकमुखेन वेदान्तकथनेव किमपि प्रयोजनम्। यस्य न तथाविधबोधस्तस्य तु सुतराम्।

शृङ्गाररससंपन्नाऽपि निवृत्तिबोधिकेति रासपञ्चाध्यायीविषये श्रीधराः तन्निवृत्तिबोधकत्वमपि न रूपकद्वारा अपि तु ''आत्मारामे कामभावः कामसंपत्तिनाशक'' इति बोधनार्थम्। कामेन कामनिवृत्तिरेव भगवन्महिमेति श्रीकृष्णः पूर्णावतार इति श्रीधराशयः।

## श्रीकृष्णस्य अंशावतारत्वखण्डनम्

अथ केश्चिदुच्यते - श्रीकृष्णः अंशावतार एव। विष्णुपुराण-भागवतादिग्रन्थेषु तथाविधवर्णनात्। यथा विष्णुपुराणे (5-1-60,61)-

**एवं संस्तूयमानस्तु भगवान् परमेश्वरः।**
**उज्जहारात्मनः केशौ सितकृष्णौ महामुने।।**

**उवाच सुरानेतौ मत्केशौ वसुधातले।**
**अवतीर्थ भुवो भारक्लेशहानिं करिष्यतः।।इति।।**

अत्र टीका -

एवमिति। उज्जहार उत्पाटितवान्। उवाचेति। अयं भावः - मम दुष्करं चेद् युष्माभिः कार्यसाहाय्यं स्यात्। न तु इदमस्ति। भूभारहरणादौ महत्यपि कार्ये मत्केशमात्रस्यैव समर्थत्वादिति न तु केशमात्रावतार इति मन्तव्यम् ''मद्दृक्पातविचूर्णिता'' इति ''कृष्णाष्टम्यां अहमुत्पत्स्यामि'' इत्यादिषु साक्षात् स्वावतारोक्तेः। सितकृष्णकेश-धारणमपि शोभार्थमेव मिश्रकेश्यप्सरोवत्। न त्वजरामरणस्यार्थ-पलितत्वं संभवति। ''काष्ठामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः'' इत्युक्तत्वात्। मत्कैशौ वसुधातलेऽवतीर्य भुवो भारनिमित्तस्य क्लेशस्य हानिं करिष्यतः - इति।

तथा भागवते (2-7-26) -

**भूमेः सुरेतरवरूथविमर्दितायाः**
**क्लेशव्ययाय कलया सितकृष्णकेशः।**
**जातः करिष्यति जनानुपलक्ष्यमार्गः**
**कर्माणि चात्ममहिमोपनिबन्धनानि।।** इति।

अत्र टीका -

श्रीकृष्णावतारमाह भूमेरिति दशभिः। सुरेतरा असुरांशसंभूता राजानस्तेषां वरूथैः सैन्यैर्विमर्दितायाः भारेण पीडितायाः कलया रामेण सह जातः सन्। ननु कोऽसौ जात-? सितकृष्णौ केशौ यस्य भगवतः स एव साक्षात्। सितकृष्णकेशत्वं शोभैव न तु वयः परिणामकृतम् अविकारित्वात्।

यत्तूक्तं विष्णुपुराणे ''उज्जहारात्मनः केशौ सितकृष्णौ महामुने'' इति, यच्च भारते -





**स चापि केशौ हरिरुच्च जह्रे**
**शुक्लमेकमपरञ्चापि कृष्णम्।**

**तौ चापि केशावाविशेतां यदूनां कुले**
**स्त्रियौ रोहिणीं देवकीञ्च।।**

**तयोरेको बलभद्रो बभूव**
**योऽसौ श्वेतस्तस्य देवस्य केशः।**

**कृष्णो द्वितीयः केशवः संबभूव**
**केशो योऽसौ वर्णतः कृष्ण उक्तः।। इति।**

तत्तु न केशमात्रावताराभिप्रायं किन्तु भूभारावतारणरूपं कार्यं कियदेतन्मत्केशावेवैतत् कर्तुं शक्ताविति द्योतनार्थं रामकृष्णयोर्वर्ण-सूचनार्थञ्च केशोद्धरणमपि गम्यते। अन्यथा तत्रैव पूर्वापरविरोधापत्तेः। ''कृष्णस्तु भगवान् स्वयम्'' इत्येतद्विरोधाच्च। कथम्भूतः? परमेश्वरतया जनैरनुपलक्ष्यो मार्गो यस्य। तर्हि ईश्वरत्वे किं प्रमाणम्? अतिमानुषकर्मान्यथानुपपत्तिरेव इत्याह आत्मनो महिमोपनिबध्यते अभिव्यज्यते येषु तानि।।

इत्येवंविधश्लोकव्याख्याने संशयं परित्यज्य विशेषप्रतिपत्त्यर्थं तव कृते विव्रियते - विष्णुपुराण - भागवतगतश्लोकानां तद्गतश्रीधरीय-टीकायाश्च विषये मम संप्रतिपत्तिरेव। श्रीकृष्णावतारवर्णनप्रसंगे यदुक्तं ''आत्मनः केशौ सितकृष्णौ'' इति तत्तु तस्य शोभाभिवृद्ध्यर्थमेव। वयोवृद्धपरिणामादिबोधकं न तु तस्याविकारित्वात् अतः केशमात्रस्य न कृष्णत्वं न वाऽवतारः। महाभारतश्लोकस्याप्ययं भावः - नीलशुक्लादि तस्य वर्णमात्रनिदर्शकम्। एतावान् अस्य महिमा सर्वसंसारतारकः। भागवते विष्णुपुराणे च इदमेव वर्णितम्। अपरश्चार्थः यत् - यथा केशस्य मस्तकवृत्तित्वं तथा श्रीकृष्णस्य महाविष्णु-शिरोभागवर्तित्वमिति।



अत्र श्रीमहाविष्णोः कृष्णस्य इव ब्रह्मवैवर्तपुराणे श्रीकृष्णात् नारायणस्य जन्म वर्णितम्। ब्रह्मखण्डस्य तृतीयाध्याये श्रीकृष्णस्य

दक्षिणांगात् नारायणस्य जन्म वर्णितं दृश्यते। श्रीधरस्वामिना महाभारतात् स्वीकृतः श्लोकः। तस्य टीकायां चतुर्धरिणाऽपि इदमेव तत्त्वं विवृतम्।

**तौ चापि केशौ निविशेतां**
**यदूनां कुले स्त्रियौ रोहिणीं देवकीं च।।**

इत्यत्र नीलकण्ठी टीका एवमस्ति -

अत्र केशावेव रेतोरूपौ पाण्डवानामिव रामकृष्णयोरपि प्रकरणसंगत्यर्थं साक्षाद् देवरेतस उत्पत्तेरवश्यवक्तव्यत्वात्। अत एव देवक्यां रोहिण्याञ्च साक्षात् केशप्रवेश उच्यते न तु वसुदेवे। तथा सति तु ''देवानां रेतो वर्ष वर्षस्य रेत ओषधय'' इत्यादि श्रौतप्रनाड्या-ऽस्मदादिवत् तयोरपि व्यवधानेन देवप्रभवत्वं स्यात्। तथा च 'कृष्णस्तु भगवान् स्वयम्'' इति श्रीमद्भागवतोक्तिः संगच्छते। न च केशोद्धरणात् कृष्णस्यापि अंशत्वं प्रतीयत इति वाच्यम्। केशस्य देहावयवत्वाभावात्। तस्मात् नमुचिवधे कर्तव्ये यथाऽपां फेने वज्रस्य प्रवेशः एवं देवकीरोहिण्योर्जठरप्रवेशे कर्तव्ये केशद्वयेन द्वारभूतेन भगवतः कार्त्स्न्येनैव आविर्भावो द्रष्टव्य इति युक्तम्'' इति।

**तयोरेको बलदेवो बभूव योऽसौ श्वेतस्तस्य देवस्य केशः।**
**कृष्णो द्वितीयः केशवः संबभूव केशो योऽसौ वर्णतः कृष्ण उक्तः।।**
**(महाभारते आदि 197-33)**

गोविन्द एव केशद्वारा देवकीगर्भतः आविर्वभूव अतो न केशमात्रस्य अवतारः। देवकीम् इति शब्देन देवकीगर्भप्रवेश एव कथितः न तु वसुदेवगर्भप्रवेशः। तथाचेत् जीवत्वमुक्तं भवेत्। यतः पञ्चाग्निविद्यायां कथितः शुक्रमार्गः जीवस्यैव न तु परमात्मनः।

**भगवानपि विश्वात्मा भक्तानामभयङ्करः।**
**आविवेशांशभागेन मन आनकदुन्दुभेः।।**
**(भागवतम् 10-2-16)**





विश्वात्मा भक्तवत्सलश्च भगवान् अंशभागेन वसुदेवस्य मनः आविवेश इति भावः। अस्यैवं समन्वयः - भगवान् पूर्वं मनसि ध्येयरूपेण आसीत्। देवक्यालिङ्गनेऽपि सत्त्वतः अचलन्नेव प्रेममात्रेण देवकीगर्भं प्रविवेश। अस्य मुख्यार्थस्तु - वात्सल्यप्रेममातृभावना गरीयसी न पितृभावना। भगवांस्तु भक्तिदृष्ट्या पितरौ प्रति समभावनः।

भागवते ''कृष्णस्तु भगवान् स्वयम्'' इत्युक्त्या कृष्णस्य पूर्णावतारत्वं बोध्यते। बलरामस्यांशत्वं तावत् श्रीधरादिभिः सर्वैः व्याख्याकारैः प्रतिपादितम्। उपासनया तु तस्यापि पूर्णत्वं भवेत्।

अथ भगवान् श्रीकृष्णः कस्य अंश इति वक्तव्यम्। चैतन्यस्य उत मायायाः? न चैतन्यस्य तस्य निरंशत्वात्। मायादृष्ट्या अंशत्वञ्चेत् सत्त्वांशो भवितुं नार्हति। रजस्तमःसंसर्गं विना सत्त्वस्य अंशता न संभवति। (तत्संसर्गे स्वीकृते जीवत्वं प्रसज्यते)। जीवस्य अल्पज्ञानमेव आवरणम्। अविद्यामन्तरा आवरणं न संभवति। परन्तु भगवान् श्रीकृष्णः कदाऽपि अविद्यावान् न भवति। सर्वेषामपि सत्त्वपरिच्छेदे सर्वसमत्वेन अंशत्व-पूर्णत्वभेद एव समुच्छिन्नो भवेत्।

महावराहपुराणेऽपि वर्णितम् -

**सर्वे नित्याः शाश्वताश्च देहास्तस्य परात्मनः।**
**हानोपादानरहिता नैव प्रकृतिजाः क्वचित्।।**

**परमानन्दसन्दोहाज् ज्ञानमात्राश्च सर्वतः।**
**सर्वे सर्वगुणैः पूर्णाः सर्वे दोषविवर्जिताः।।इति।।**

भगवतः देहाः सर्वेऽपि नित्याः सर्वज्ञाः सर्वशक्तिमन्तः। देहदेहिभावः तावत् लीलामात्रमिति भावः। अवतारेषु तारतम्यभावना न करणीयेति प्रियादासोऽपि भणति। तथापि माधुर्य-कृपादिगुणावेश-मात्रेण तारतम्यभेदो भवतीति विष्णुपुराणतो ज्ञायते। श्रीकृष्णस्य श्रीनृसिंहश्रीरामाद्यवतारसमत्वेऽपि गुणप्राकट्यतः विशेष एव।

## श्रीकृष्णस्य पूर्णत्वम्

**मैत्रेय उवाच -**

**हिरण्यकशिपुत्वे च रावणत्वे च विष्णुना।**
**अवाप निहतो भोगानप्राप्यानमरैरपि।।**

**न लयं तत्र तेनैव निहतः स कथं पुनः।**
**संप्राप्तः शिशुपालत्वे सायुज्यं शाश्वते हरौ।।**

**एतदिच्छाम्यहं श्रोतुं सर्वधर्मभृतां वर।।**
**कौतूहलपरेणैतत् पृष्टो मे वक्तुमर्हसि।।**

**श्रीपराशर उवाच -**

दैत्येश्वरस्य वधाय अखिललोकोत्पत्तिस्थितिविनाशकारिणा अपूर्वतनुग्रहणं कुर्वता नृसिंहरूपमाविष्कृतम्।।4।। तत्र च हिरण्यकशिपोर्विष्णुरयमिति एतन्न मनस्यभूत्।।5।। निरतिशयपुण्य-समुद्भूतमेतत् सत्त्वजातमिति।।6।। रजउद्रेकप्रेरितैकाग्रमतिः तद्भावनायोगात् ततोऽवाप्तवधहैतुकीं निरतिशयामेव अखिल त्रैलोक्याधिक्यकारिणीं दशाननत्वे भोगसंपदमवाप।।7।। न तु तस्मिन् अनादिनिधने परब्रह्मभूते भगवत्यनालम्बिनि कृते मनसः तल्लयमवाप।।8।।

एवं दशाननत्वेऽपि अनङ्गपराधीनतया जानकीसमासक्तचेतस्तया भगवता दाशरथिरूपधारिणा हतस्य तद्रूपदर्शनमेवासीत् नायम् अच्युत इत्यासक्तिर्विपद्यतोऽन्तःकरणे मानुषबुद्धिरेव केवलमस्याभूत्।।9।। पुनरप्यच्युतनिनिपातमात्रफलम् अखिलभूमण्डलश्लाघ्यचेदिराजकुले जन्म अव्याहतैश्वर्यं शिशुपालत्वेऽप्यवाप।।10।। तत्र तु अखिलानामेव स भगवन्नाम्नां तु अहङ्कारकारमभवत्।।11। ततश्च तत्कालकृतानां तेषामशेषाणामेव अच्युतनाम्नाम् अनवरतम् अनेकजन्मसु वर्धितविद्वेषा-नुबन्धिचित्तो विनिन्दनसन्तर्जनादिषु उच्चारणमकरोत्।।12।। तच्च रूपम्







उत्फुल्लपद्मदलामलाक्षिमत्युज्ज्वलपीतवस्त्रधार्यमलकिरीट-केयूरहार-कटकादिशोभितम् उदारचतुर्बाहुशंखचक्रगदाधरम् अतिप्ररूढवैरानुभावाद् अटनभोजनस्नानासनशयनादिषु अशेषावस्थान्तरेषु नान्यत्रोपययौ अस्य चेतसः।।13।। ततस्तमेव आक्रोशेषु चक्रांशुमालोज्ज्वलम् अक्षयतेजः-स्वरूपं ब्रह्मभूतम् अपगतद्वेषादिदोषं भगवन्तमद्राक्षीत्।।14।। तावच्च भगवच्चक्रेण आशुव्यापादितः तत्स्मरणदग्धाखिलाघसंचयो भगवतां तमुपनीतस्तस्मिन्नेव लयम् उपययौ।।15।। एतत् तवाखिलं मयाऽभिहितम्।।16।। अयं हि भगवान् कीर्तितश्च संस्मृतश्च द्वेषानुबन्धेनापि अखिलसुरासुरादि दुर्लभफलं प्रयच्छति किमुत सम्यक्भक्तिमतामिति।।17।।

एवं बुध्यते यत् द्वेषेणाऽपि कृष्णभक्तिर्मुक्तिप्रदा इति। नृसिंहे सर्वथा लालनभक्तिः, रघुनन्दने लालनवात्सल्यभक्तिस्तथा मानसमर्यादया माधुर्यभक्तिरपि, मर्यादापुष्टिमये श्रीकृष्णे तावत् लालन-वात्सल्य-माधुर्यरूपा त्रिविधा भक्तिः संभवति। श्रुत्या निराकृतमपि साधनीकृत्य बहवः संसाराद् उद्धृता इति सः भगवान् पूर्णावतारः।

किंबहुना स्वीयां प्रतिज्ञामप्युल्लंघ्य साधनान्तरमेव दर्शितं तेन यथा भगवद्गीतायाः षोडशाध्याये - कामः क्रोधस्तथा लोभस्तस्मा देतत् त्रयं त्यजेत्'' इत्युक्त्वाऽपि ''धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ'' इत्यपि निश्चितम्। निषिद्धकामवर्जनं प्रथमस्याशयः विहितकामसेवनं द्वितीयस्य।

तथापि गोपिकाः निषिद्धकामसेवनयाऽपि मोक्षं प्राप्ताः। अत्र श्रीमद् भागवते उद्धवोक्तं प्रमाणम्। यथा -

**आसामहो चरणरेणुजुषामहं स्याम्**
**वृन्दावने किमपि गुल्मलातौषधीनाम्।**

**या दुस्त्यजं स्वजनमार्यपथं च हित्वा**
**भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम्।।**

**(भागवते 10-47-62)**

एवं गोपिका अतीवसामर्थ्यवन्तम् अद्भुतमपि वैदिकमार्गं हित्वा श्रीविष्णुचरणेषु अपवर्गमाप्तवत्य इति बुध्यते। देवनिर्मितस्य पाञ्चरात्रादेर्निन्दाऽपि कृता। परन्तु यत् कृत्यम् अवैदिकं तत्तु महामुनिनाऽपि प्रशंस्यते।

श्रीकृष्णस्य सर्वपतित्वेन तत्र निषिद्धकर्माभावस्तथाऽपि गोपिकानां गृहस्थकर्मदृष्ट्या किञ्चित् निषिद्धम्। तादृशं निषिद्धमपि यस्य विषये साधनं भवति स श्रीकृष्णः भगवान् पूर्णावतारः। एवम् अंशवाक्यानि समाधाय स्पष्टपूर्णावतारवाक्यानि दर्शयिष्यन्ते।

श्रीमद्भागवते प्रथमस्कन्धस्य तृतीयाध्याये -

**एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्।**
**इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे।।** इति।।

यद्यपि युक्तिबलेन नावतारेषु भेदस्तथाऽपि अवतारान्तरे तत्तत्कार्यार्थमेव ज्ञानशक्तिमत्त्वं न श्रीकृष्णे इति भगवान् श्रीकृष्ण एव पूर्णावतारः।

अथवा श्रीकृष्णो न दशावतारी अपि तु साक्षाद् भगवान्। यथोपवर्णितं जयदेवेन गीतगोविन्दे - दशावतारस्तुतौ।

गोपालतापनीये यद्यपि अस्यावतारत्वमुक्तं तथाऽपि सकलावतारश्रेष्ठतायाः ब्रह्मताया-श्च कारणेन श्रीकृष्णः पूर्णः परमात्मा। वारकरीसंप्रदायेऽपि श्रीकृष्णो निजधाम अगत्व पण्ढरपुरे चिरवासम् अङ्गीकृतवान् इति वाक्यतः, श्रीकृष्णो न दशावतारी इति साक्षाद् भगवानिति च स्पष्टं ज्ञायते।

ननु यद्यपि ''तत्रांशेनावतीर्णस्य' (भागवते 10-1-2), 'दिष्ट्याद्य ते कुक्षिगतः परः पुमानंशेन साक्षाद् भगवान् भवाय नः' (भागवते 2-2-41), ''ताविमौ वै भगवतो हरेरंशाविहागतौ'' इत्यादिषु बहुषु स्थलेषु अंशत्वमेव कथितं तर्हि एकेनैव वाक्येन कथं वा पूर्णत्वसिद्धिरितिचेत्।







सत्यम्। तथाऽपि शास्त्रारंभे गुह्यसूत्ररूपेण जन्मपरक अध्याय इति कारणेन, तस्य परिभाषासूत्ररूपेण च वाक्यस्यास्य प्रवृत्तेः परिभाषायाश्च शास्त्रे एकवारपठनस्य नियमात् च अयमेव अर्थः सिध्यति। अनयैव रीत्या विश्वनाथेन विवृतमपि। अंशपरकस्य वाक्यस्य प्रकरणरूपं, वाक्यस्यास्य च श्रुतिरूपं बोद्धव्यम्।

**श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये**
**पारदौर्बल्यम् अर्थविप्रकर्षात्।। (जैमिनिसूत्रम् 33-14)**

इति च मीमांसाशास्त्रे श्रुत्यादीनां समवायेन प्राप्तौ पारदौर्बल्य-कथनेन

**श्रुत्यादिबलीयस्त्वान्न बाधः**
**(ब्रह्मसूत्रम् 3-3-49)**

इति च उत्तरमीमांसासूत्रं पूर्वोक्तमेव समर्थयति। एवं स्थिते श्रीकृष्णस्य पूर्णावतारपरकस्य वाक्यस्य श्रुतिरूपत्वात्। अंशावतार-परकानां वाक्यानाञ्च प्रकरणरूपत्वात् श्रुतिवाक्यस्यैव प्राबल्यम्। अपि च श्रीकृष्णस्य अंशावतारपरकः वैदिकः पौराणिको वा संप्रदायो न कोऽपि दृष्टिपथमायाति। श्रीधरस्वामिभिरपि इत्थमेव समाहितम्। तथाऽपि मम मत्या इदमेवं समाधातुमपि शक्यते -

**पूर्णः कृष्णः केवलो यदुराजः अंशः केवल ईश्वरः।**
**यो गोपालः। नान्यदिदं तस्य वाक्यतः।।**

अनुगीतास्वपि यथा -

**अबुध्या नाग्रहीर्यस्त्वं तन्मे सुमहदप्रियम्।**
**न च साद्य पुनर्भूय स्मृतिर्मे संभविष्यति।।10।।**

**नूनमश्रद्दधानोऽसि दुर्मेधो ह्यसि पाण्डव।**
**न च शक्यं पुनर्वक्तुमशेषेण धनञ्जय।।11।।**

**स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदने।**
**न शक्यं तन्मया भूतस्तथा वक्तुमशेषतः।।12।।**

**परं हि ब्रह्म कथितं योगयुक्तेन तन्मया।**
**इतिहासं तु वक्ष्यामि तस्मिन्नर्थे पुरातनम्।।13।।**

**यथा तां बुद्धिमास्थाय गतिमग्र्यां गमिष्यसि।**
**शृणु धर्मभृतां श्रेष्ठ गदितं सर्वमेव मे।।14।।**

इत्यादि।

अत्रायं भावः - भगवता युद्धभूमौ समुपदिष्टां गीतां युद्धानन्तरं विस्मृत्य पार्थस्तां पुनः श्रावयितुं प्रार्थयामास। तदा भगवान् उवाच अश्रद्धानोऽसि न पुनर्मया वक्तुं शक्यम्। योगसाधनया मया प्राप्तं धर्ममहं तुभ्यं प्रदत्तवान्। अंशस्य स्थाने पूर्णस्यावेशो भवतीति वचनतः अनुमातुं शक्यम्। भगवद्गीतायां स्वयमेव भगवता 'वृष्णीनां वासुदेवोऽस्मि' इति कथयित्वा द्वारकाधीशस्य वासुदेवस्य विभूतित्वं दर्शितम्।

ननु उपाधिमन्तरा स्वयमेव स्वस्य विभूतिरिति दुरुपपादम्। उपाधिस्वीकारे च अंशत्वं संप्राप्तमेव - इति चेत्; न।

''तवायमात्मजः प्रागिति सामान्योक्त्या ऋषिरयं जन्मान्तरागतं नाम कथयति इति नन्दो मन्यते स्म'' इति श्रीधरस्वामिचरणाः।

तव पुत्रोऽयं पुरा वसुदेवसद्मनि जात इति वासुदेवाख्यामलभत। एवमार्यपुत्रस्य द्वारकायां केवला विभूतिरस्तीति प्रतीमः।

**गोपालतापनीयेऽपि -**

**सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम्।**
**द्विभुजज्ञानमुद्राढ्यं वनमालिनमीश्वरम्।।**

इति यद् वर्णितं तस्य उपबृंहणमपि पद्मपुराणे यथा -

**सेन्द्रियोपि यथा सूर्यस्तेजसा नोपलक्ष्यते।**
**तथा कान्तियुतः कृष्णः कालं मोहयति ध्रुवम्।।42।।**

**न तस्य प्राकृती मूर्तिर्मेदोमांसास्थिसंभवा।**
**योगी चैवेश्वरश्चान्यः सर्वात्मा नित्यविग्रहः।।43।।**





**काठिन्यं दैवयोगेन करकाघृतयोरिव।**
**कृष्णस्यामिततत्त्वस्य पादपृष्ठं न देवता।।44।।** इति।।

पातालखण्डे।

दैवमिति कीर्तिता ईश्वरशक्तिः गाढा अनघ्यस्तविवर्तत्वं भजन्ती अस्थिमांसमेदोभरितं वपुर्धरति चेदपि न तद् वपुः प्राकृतम्। यथा संसारस्य ज्ञानेन बाधः न तथाऽस्य वपुषः। अतो नित्यत्वम्। यद्यपि महावराहपुराणे सर्वेषामप्यवताराणां नित्यत्वमुक्तं, तथापि कैवल्यप्रदायक-संपूर्णसामर्थ्यस्य प्रकटनमत्रैव श्रीकृष्णवयुषि विद्यत इति कारणेन अस्यैव पूर्णता।

''भुजद्वयावृतः कृष्णो न कदाचिच्चतुर्भुजः ''इति श्लोकार्धेन गोपालतापनीयश्रुतेरुपबृंहणमपि कृतम्। सुदर्शनादौ चतुर्भुजत्वमपि श्रीमद्भागवते हरिविजयादिग्रन्थेषु च निरूपितम्। सर्वेषामेषां वाक्यानां निर्णायकं तावत् पदम्पुराणगतं वाक्यमेव।

तदित्थम् -

**वृन्दावनपरित्यागो गोविन्दस्य न विद्यते।**
**अन्यत्र यद् वपुस्तत्तु कृत्रिमं तन्न संशयः।। इति।।**

गोविन्दो न वृन्दावनं परित्यक्तवान्। मथुराद्वारकदिषु वर्तमानः कृष्णस्तु अंशरूप एवेति भावः।

**कृष्णोऽन्यो यदुसंभूतो यः पूर्णः सोऽस्त्यतः परः।**
**वृन्दावनं परित्यज्य स क्वचिन्नैव गच्छति।।**

**द्विभुजः सर्वदा सोऽत्र न कदाचिच्चतुर्भुजः।**
**गोप्यैकया युतस्तत्र परिक्रीडति नित्यदा।।** इति।।

वृन्दावनकृष्णस्य पूर्णत्वं यदुकूलेऽवतीर्णस्य च अंशत्वं बोधयति।



**एष नारायणः साक्षात् क्षीरार्णवनिकेतनः।**
**नागपर्यङ्कमुत्सृज्य ह्यागतो मथुरां पुरीम्।।** इति।।

मथुरागतः कृष्णः नारायणः इत्येवास्य आशयः। ब्रह्मवैवर्त-पुराणेऽपि एवमुभयविधश्रीकृष्णस्य वर्णनं दृश्यते। त्रिपादमहानारायणो-पनिषदि मुख्या तनुरिति या वर्णिता सा वैकुण्ठगता मूर्तित्रयाद्भिन्नैव चतुर्थी नारायणेति कृष्णेति च कीर्तिता वर्तते।

नारायणः पूर्णः कृष्णो विभूतिरिति, अथवा कृष्णः पूर्णः नारायणो विभूतिरिति च वादः निरर्थकः। वैष्णवानां श्रीकृष्णनारायणयोः भेदाभावात्। मातृकल्पेन ज्ञानेश्वरेणापि भागवतवचनसमन्वयपूर्वकं श्रीकृष्णस्य स्थानं वैकुण्ठमित्येव निर्धारितम्।

वैकुण्ठे शाश्वतस्थानेऽपि भक्तिवशात् भगवतः कुत्राप्यविर्भावो भवति। तथापि व्रजस्थस्य अवतारस्य पूर्णत्वं, द्वारकागतस्य च अंशत्वं बोद्धव्यम्।

एतदपि श्रुति-पुराण-तन्त्राणां समन्वयात् सिद्ध्यतीति नाऽत्र शङ्का कार्या। स एव नामतः उपायः स्वरूपतश्च उपेय इति विवेकः। तद्रूपाविर्भावस्य कृते न भगवतोऽन्यत्र गमनावश्यकता।

ननु रूपाचार्यादीनां न संमतमेतत्। गमनाभावे गोपिकानां कृष्ण विरहकथनं, द्वारकागमनादिकञ्च विरुद्धं स्यादिति चेत्; न। श्रूयताम्। तत्रैवान्तरधीयत इति भागवतवाक्ये अन्तर्धानं तावत् गोपिकानां हृदये तदेकीभवनमेव। गोपिकानां श्रीकृष्णेन सह ऐक्यरूपसंयोगे सत्यपि सततविरहव्याकुलता। द्वारकागमनञ्च तस्य भगवतः अंशाविर्भावेन लीला। गोपिकादर्शनेन भक्तिस्वरूपमवबुध्यतामिति धिया भगवता गोपिकासमीपम् उद्धवः संप्रेषित इत्यपि रहस्यम्। अतो न रूपाचार्यदिवचनं प्रमाणम्।

वेदपुराणादिसंशोधनेन तापनीयभागवतादिविलोकनेन च श्रीकृष्णस्य स्वयंरूपतांऽशरूपता चेति द्वयमुपलभ्यते। तत्र स्वयंरूपता व्रजस्थमूर्तेः, अंशरूपता च तदितरत्र विद्यमानमूर्तेः। सर्वेषामवताराणां साम्ये अंशावतार एव न घटेत। रजस्तमोगुणौ विना सत्त्वांशो न घटते। ब्रह्म तावत् निरंशम्। तत्रापि वेदोक्तसाधनसंपत्त्या उद्धरन्तीति





अन्यावतारत्वम्। साधनसंपत्तिं विनाऽपि उद्धरतीति श्रीकृष्णः पूर्णावतारः। वेदविहितकर्मद्वारा भक्तिं प्रतिपादयतां वेदागमादिग्रन्थानां दृष्ट्या सृष्टिसंहारादिकार्यार्थमवतीर्णः विष्णवादिरुपास्यः। वेदविहित-कर्मापेक्षां विनैव ईश्वरभक्त्या भगवतत्प्राप्तिं वदतां वेदागमानां च दृष्ट्या गोकुलपतिः श्रीकृष्ण एव उपास्य इति विवेकः।

ननु ईश्वरस्यैकत्वेऽपि कथं तद्भक्तेर्विभिन्नतेति चेत्; न। ईश्वरस्य मायाविनोद एवायमिति न कोऽपि विरोधः। तथाहि दर्शयति सात्त्वतश्रुतिः -

**मूलम् -**

**दुरवबोध इव तवायं विहारयोगो**
**यदशरणोऽशरीर इदमनवेक्षितारमत्**
**- समवाय आत्मनेवाविक्रियमाणेन**
**सगुणमगुणः सृजसि पासि हरसि।। (भागवत 6-9-34)**

**श्रीधरीयटीका -**

ननु केवलानुभवरूपत्वे मम सृष्ट्यादिकर्तृत्वं कथम्?

**तत्राहुः -** दुरवबोध इव तवायं विहारयोगो यद् यस्माद् अशरणो निराश्रय इदं विश्वम् अनवेक्षितोऽस्माकं समवायो मेलनं साहाय्यं येन सः ।।34½।।

**मूलम् -** अथ तत्र भवान् किं देवदत्तवदिह गुणविसर्गपतितः पारतन्त्र्येण स्वकृतकुशलाकुशलं फलमुपाददाति? आहोस्वित् आत्माराम उपशमशीलः समञ्जसदर्शन उदास्त? इति ह वाव न विद्मः।।35।।

**श्री.टी. -** दुर्ज्ञेयान्तरमाहुः अथ तत्रेति। यथेह देवदत्तो गृहादि निर्माय तत्र स्वकृतशुभाशुभयोः फलमुपादत्ते एवं भवान् ब्रह्मस्वरूपो जीवरूपेण गुणविसर्गे पतितः सन् उपाददाति? यद्वा समञ्जसम् अप्रच्युतं दर्शनं चिच्छक्तिर्यस्य स भवान् उदास्ते? उदासीनः साक्षितया वर्तत इति।।35।।

**मूलम् -** न हि विरोधः। उभयं भगवति अपरिगणितगुणगण ईश्वरे अनवगाह्यमाहात्म्ये अर्वाचीनविकल्प-वितर्क-विचार-प्रमाणाभासकुतर्क-शास्त्र-कलिलान्तःकरणाश्रयदुरवग्रहवादिनां विवादानवसर उपरतसमस्तमायामये केवल एव, आत्ममायामन्तर्धाय कोनु अर्थो दुर्घट एव भवति स्वरूपद्वयाभावात्।।36।।

**श्री.टी. -** तदेवं विरोधेन दुर्ज्ञेयत्वमुक्त्वा तत्परिहारेण ज्ञानप्रकारमाहुः। भगवतीति - अपरिमिता गुणगणा यस्य तस्मिन्। विकल्पः - एवं वेति। वितर्कः किमत्र युक्तमिति। विचारः इत्थमेवेति तत्र प्रमाणाभासः। तदनुग्राहकाः कुतर्काश्चार्वाचीना वस्तुस्वरूपा-संस्पर्शिनः ये विकल्पादयस्तेषु शास्त्रेषु तैः कलिलं व्याकुलमन्तः करणमाश्रयो यस्य दुरवग्रहस्य तेन वादिनां विवादस्यानवसरे गोचरे।

ननु श्रद्धामात्रमेतत्। युक्तिरुच्यताम्।

तत्राहुः उपरतो मायामयः संसारो यस्मिन्। तस्मिन् केवलेऽपि आत्ममायां मध्ये निधाय कोन्वर्थः कर्तृत्वादिः न संभवति। यदि वस्तुतः कर्तृत्वादि भवेत् तर्हि विरोधः स्यात् न तु तदस्तीत्याहुः। स्वरूपद्वयाभावात्।।36।।

**मूलं -** समविषममतीनां मतमनुसरसि यथा रज्जुखण्डः सर्पादिधियाम्।।37।।

**श्री.टी. -** तदेवं विरोधं परिहृत्य टीका - अनुग्रहनिग्रहादिकं तु तत्तन्मतिभेदेन त्वन्मायया त्वयि स्फुरतीत्याहुः। समा विषमा च मतिर्येषां तेषां मतम् अभिप्रायम्। सर्पादिविषया धीर्येषां तेषां यथा रज्जुखण्डस्तथा तथा भाति। यद्वा तमेवाविरोधं पुरुषमतिभेदेन दर्शयति सम-विषमेति।।37।।

एवं भगवान् तव क्रीडायोगं साक्षात्कुर्वतामस्माकं प्रज्ञा कुण्ठिता भवति। त्वमेव जीवरूपेण भोगान् भुङ्क्षे स्वयञ्च उदासीनो योगमव लम्बसे। तदेतद् द्वयमपि त्वयि सममेव न विरुद्धम्। यतस्त्वमेव विश्वेश्वरः विश्वजननी चेति।







सर्पाकारेण भयजनने, जलधराकारेण तृषाजनने रज्जुरूपेण च भ्रान्तिजनने त्वमेव भगवान् तदा जीवत्वं भजसि। स्वयं भगवता उदासीनत्वम् कर्मफलदातृत्वं भक्ततारकत्वमिति त्रयो भावाः दर्शिताः यथा -

**न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः।**
**न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते।।**

**गीता (5-15)।।**

**तानहं द्विषतः क्रूरान् संसारेषु नराधमान्।**
**क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ।।**

**गीता (16-19)।।**

**लभते च ततः कामान् मयैव विहितान् हितान्।।**

**(7-22)।।**

**समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।**
**ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्।।**

**(9-29)।।**

**अपि चेतु सुदुराचारो भजते मामनन्यभाक्।**
**साधुरेव स मन्तव्यः सम्यग् व्यवसितो हि सः।।(9-30)।।**

इति।।

कर्तृत्वं कर्म कर्मफलदानमिति सर्वं माया। जीवसंकल्पकारणम्। परमात्मा तु अलिप्त उदासीनत्वात्। पापकर्मणः कथं भगवतः प्राप्तिरिति न शङ्कनीयम्। ब्रह्मण एव जीवत्वात् न कर्माकर्मविरोधः। ब्रह्मणो जीवत्वं स्वप्नानुभव इव। जाग्रज्जीवस्य यथा स्वप्नाभासजीवः स्वप्नाननुभवति तथा ब्रह्म जीवो भूत्वाऽनुभवति।

तत्र स्वप्नगतं ब्रह्मविष्णुमहेश्वररूपं मूर्तित्रयं स्वप्नाभासजीवाय कर्मफलं प्रददाति। एकेनैव किमर्थं नेति चेत् मूलतः आभासरूपे स्वप्ने

तेन किम्? प्रत्यक्षतः अविद्याजन्यत्वे स्वप्नस्य, कर्मजन्यत्वकथनं वृथा। यत्र सर्वं मायाकृतं तत्र एकेनैव सर्वोद्धारेऽपि न हानिः। स्वप्नगताः सर्वेऽपि विषयाः स्वप्नसाक्षिणं न लिम्पन्ति खलु।

एवमेव मायाकृतप्रपञ्चे जीवो भोक्ता सृष्टिकार्यार्थमूर्तयश्च कर्मफलदातृत्वेन स्थिताः विष्णवादयः। कर्माचरणं विनाऽपि त्राता केवलमस्माकं श्रीकृष्ण एव।

तत्र श्रीगुरुचरणगतरहस्यमित्थम्। प्रत्यक्षानुमानाभ्यां जगतः सत्यत्वं बुध्यते। परं शब्दप्रमाणेन तावत् जगतो मायामयत्वम् अपरोक्षी क्रियते।

मायावशात् प्राप्तसत्ताकात् मूर्तित्रयात् कर्मफलमवाप्तुम् उपासनाः वेदे कथिताः। परन्तु श्रीकृष्णतः नैष्कर्म्यसिद्धौ भक्तितः तदावेशं ते कथयन्तीति सर्वं समञ्जसं न कोऽपि विरोधः।

एवं श्रीकृष्णस्य पूर्णत्वं सिध्यति। तत्र स एव व्रजविहारी सेव्यः। द्वारकापतिस्तावत् गुरुदृष्ट्या वरिष्ठ इति तातपादाः। शहामुनि कथितास्त्रयोऽपि श्रीकृष्णाः आवेशावतारा एव।

**इति मधुराद्वैतसिद्धौ द्वितीयं प्रकरणम्**





## VVr` àH$aU_

### अथ सेवकगुणाः।

सेवकस्य के गुणा इत्युक्ते उच्यते।

अन्तर्बहिश्च गङ्गासलिलवत् अतिनिर्मलो भवति सेवकः। सूर्य इव तेजस्वी भवति। प्रेमनिधिः, चतुरः, स्वामिकार्ये कुशलः, स्वामिभाग्ये आत्मनो भाग्यं मन्वानः, स्वामिकार्यार्थं दृढनिश्चयः, स्थितप्रज्ञः, स्वाम्यर्पितसकलक्रियाफलः, भाग्ये शिरोमणिः, स्वामिवचनमेव प्रमाणीकुर्वाणः, सर्वदा गर्वरहितः, दीनत्वेऽपि न याचनरतः, सेवकपालनशीलः स्वामी नारायण इति विदितगुणः। कामनापूर्त्यर्थं स्वामिनमनुसरन् द्रव्यसेवको भवति। न द्रव्यसेवकत्वमुपयोगाय।

''यदीयमभिमानमात्मसात्कृत्य वयं भवामो हरिभूषणा'' इति तातचरणानामुक्तिः (ज्ञानेश्वरी 9-362) प्रमाणं तस्य। ''ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते'' इत्यादिवर्णितरीत्या विषयचिन्तनमेव अन्ततः प्रज्ञाविनाशकारणम्। तस्य च कारणम् अनात्मनि आत्मबुद्धिः। तां समूलनाशं नाशयित्वा अन्तर्लीनतां भजित्वा मधुराद्वैतमास्वदमानः कामादीन् निर्जित्य सुखी भवति सेवकः। परमाद्वैतस्य दास्याय सर्वां देहात्मबुद्धिमुत्पोत्थ्य भगवच्चरणपेटिकायां न्यस्तहृदयःसेवको भवति। देहाश्रिताः वर्णाश्रमधर्माः निगमविहिताः। निगमाश्च स्वाम्याज्ञारूपाः। सेवकस्य कृते स्वाम्याज्ञैव प्रमाणम्। तत्र न्यूनता मोदपादि। अतः निष्कारणमेव वेदवचनपालनमेव सेवकगुणः। अपि च सर्वदा निजस्वान्ते प्रतिक्षणं शरीरमिदं कालेन कवलीक्रियते अतः प्राणोत्क्रमणादूर्ध्वं कथं स्वाम्याज्ञापालनं भवेदिति स्वयं स्वाम्याज्ञापालनपरः सन् अपरान् यः शिक्षयते स सेवकः। यस्य सकामकर्मणि वैराग्यं निष्कामकर्मणि च परा निष्ठा स एव सेव्य इति स्वामिनः वलवत्त्वमधिगम्य यः क्वचिदपि न स्वामिनं जेतुमुद्यमी भवेत् न वा शत्रोरिव तस्माद् दूरे भवेत् सेवकः।

अस्माकं स्वामी अतीव उदासः तदीयाः सर्वेऽपि जीवाः सदारपुत्रं दासी भूता इति विदित्वाऽपि न तन्मात्रदृष्टिर्भूत्वा स्वसर्वसद्गुणैः सह आत्मानं स्वामिचरणेषु यः समर्पयति स सेवकः।

एवंविधसेवकं प्रति मोहेन स्वामी च स्वामित्वं विस्मृत्य शनैःशनैः सेवके स्वामित्वावतरणमवलोकयेत्। एवमत्यन्तभेदाधिष्ठानेऽपि स्वामीच्छयैव संबन्धो लसेत्। तदभिहितमगस्त्यसंहितादौ यथा-

**देहत्रयविनाशं च कृत्वादौ गुरुवक्त्रतः।**
**ततः संबन्धयोग्यत्वं प्राप्नोति मुनिसत्तम।।**
**(चरमाध्याये)**

इति साधनभक्तिः। ततश्च गुरूपदेशतो ज्ञानमुदियात्। ततश्च देहत्रयगताऽसक्तिर्विनष्टा भवेत्। यथा स्वप्नदृष्टाः गृहदारादयः जागरायां पूर्णतो नष्टाः भवन्ति तथा सद्गुरुमुखतः भक्त्या तत्त्व श्रवणेन देहत्रयभावना विनाशं यायात्। तदा भक्तस्य संबन्धयोग्यतायां सत्यां तदीया साधनभक्तिरेव फलदायिनी स्यात्। वैष्णवराधावल्लभस्य भागवतपरके ग्रन्थे भगवत्सन्दर्भनामके प्रकरणे भगवतः प्रभावेन ज्ञानोत्तरमपि भक्तिरुदेतीति जीवगोस्वामिमतमुपन्यस्तम्।

**ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति।**
**समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्।।**
**(भगवद्गीता 18-54)**

इत्यत्र ''ब्रह्मभूतः प्रसन्नात्मा.....मदभक्तिं लभते पराम्'' इति हि शाब्दी प्रमा पुरुषोत्तमवाक्यत एव सिध्यति।

अतः आहार्यद्वैतमाश्रित्य भक्तः संबन्धं योजयति। अद्वैते आहार्यद्वैतसत्त्वे न कश्चिद् विरोधः इति बोध्यम्।

## संबन्धविचारः

अथ विज्ञानभिक्षुतदितरमते द्वैतानुसारं चैतन्यात् परमात्मनो







जीवभेदे जीवस्य जडत्वप्रसक्तिः ततश्च तस्य दास्यत्वं कुतः? जडत्वे च जीवे प्रेमानन्दौ कथङ्कारं वा घटेयाताम् ?

माध्वादिद्वैतमते जीवस्य चेतनत्वेऽपि ब्रह्मणोऽत्यन्तभिन्नतया कथं वा संबन्धोऽस्य प्रामाणिकः स्यात्? दास्यसंबन्धेऽपि संबन्धान्तरं तु न भवेदेव। यदि दास एव स्वामिनः पिताऽहमिति वदेत् तदा तदधर्म्यमेव स्यात्। तथा वात्सल्यादिसंबन्धा व्यर्था भवेयुः। तथास्वीकारे नरकवासो भवेत्।

अथवा दास्यसंबन्धाद् भिन्नसंबन्धाः सर्वेऽपि आरोपिता भवेयुः। तथात्वे भक्तिरेव मिथ्या भवेत् नारायणश्च संसारी भवेत् ईश्वरपुत्रभावना तदितरदासेभ्यःश्रेष्ठा। भगवानपि तत्पक्षपाती। कलौ नामसंकीर्तनादेव मनुष्यस्तरति इति यद्यपि कथितं तथापि नारायणस्य सकलजीवपक्ष-पातित्वाद् अचेतनोपेक्षा प्रसज्यते। अत्रेदं बोध्यं- जीवाजीवयोर्भगवान् जीवेषु भक्तपक्षधारी चेदपि भक्तेषु पुनर्न भेदभावः। भक्तानामपि पक्षं न धरेच्चेत् तस्य निर्दयता भवेत् इति।

अपि च जीवगतपुण्यविशेषेण यदि भगवतो भक्तपक्षपातस्तर्हि स संबन्धः केवलं कर्मजन्यो भवेत् कर्मजन्यत्वेन नश्वरो भवेत् दृढत्वेन च तस्य भगवतःसंसारित्वं भवेत् निर्दयता च भवेत् इत्यादि शृंखलाऽ-परिहार्या। द्वैतगतलीलायां यत्किञ्चनभोगसत्त्वात् दयाया अभावः प्रसज्यते परन्तु आहार्यद्वैते अनध्यस्तविवर्तगतलीलायां प्रयोजनाभावात् न दयाविरोधप्रसंगः।

## विशिष्टाद्वैतमतपरीक्षणम्

विशिष्टाद्वैतमते तावद् भगवान् पूर्णः जीवश्च तदंशः। चिदचिदीश्वररूपतत्त्वत्रये चिदचितोः परमात्मनः भेदाभेदौ च, अत्र जीव-परमात्मनोरंशांशिभावेऽपि चिदचिदुभयम् ईश्वरस्य शरीरं भवति तेन जीवपक्षे प्रकृत्यपेक्षाऽपि न घटते।

अपि च सर्वशक्तिमतः परमात्मनः एव लाञ्छनं खलु। अभक्तस्य नरकादिदण्डोऽपि निर्दयतां स्वभोगार्थताञ्च दर्शयेत्। जीवाय

तत्सुखप्रदनार्थं दण्ड इतिचेन् दण्डवशात् दया दाम्भिकी स्यात्। विशिष्टाद्वैते च जीवस्य परात्मनोंऽशत्वात् परमात्मनःसुखं न भवेदेव। एवमभक्तस्य दण्डनेन परमात्मनो निर्दयता विषमता च सर्वथा दुर्निवार्ये (परमात्मनः)। केवलाद्वैते तावत् जीवस्येश्वररूपत्वात् ईश्वरज्ञानेन तदीयसुखप्राप्तिरिति न दोषः। एतदर्थं जीवं सुधारयितुं दण्डयतो न निर्दयता परमात्मनः। दण्डप्रदानयपि तस्य दयारूपमेव। स्वापत्यस्य सुखाय दण्डयन्त्याः जनन्थाः दण्डो न दयाप्रतिबिन्धकः। एवं न्यायो दया च केवलाद्वैतेऽविरुद्धे।

विशिष्टाद्वैते हि परमात्मनोऽव्यापकत्वादिदोषा अपि। एते च। वल्लभीयशुद्धाद्वैतेऽपि। यद्यपि वल्लभेन तत्त्वदीपनिबन्धे ''आत्मसृष्टेर्न नैर्घृण्यं वैषम्यञ्चापि विद्यत'' इत्याभिहितं तथाऽपि ईश्वरस्य लीला जीवस्य च दुःखमिति एकस्य क्रीडाऽपरस्य मरणमिति परमात्मनः उन्मत्तविहारो भवेत्।

ननु जीवस्येश्वरत्वे आनन्दार्थं भक्तेः काऽवश्यकता? इतिचेत् न।

सृष्टिःस्वीया परकीया वा भवतु विषमसत्तायामेव क्रीडा न समसत्तायाम्। तथाचेत् मृत्तिकया स्वयं गजपुत्तालिकां निर्माय पुनस्तस्य भञ्जनमेव भवेत् स्वदयैवावयवस्य भङ्गे स्वस्यैव महद् दुःखं भवेन्नु। मिथो युद्धं भवेत्।

एवं समसत्तायाम् जीवेश्वरभेदे मिथो युद्धं स्यात्। अंशांशि-अवयवावयवि-इत्यादिसंबन्धेषु भेदाभेदयोः समसत्तायां जीवस्याव-यवरूपस्य दुःखेन अवयविनःपरात्मनो दुःखं भवेत्। ईश्वरस्य सर्वशक्तिमत्त्वात् न तस्य दुःखप्राप्तिरिति चेत्, न; जीवान्तरस्य तु दुःखम् अपरिहार्यमेव भवेत्।

अपिच वल्लभमतेऽपि जीवेश्वरयोरथेद इव यो भाति, सोऽपि सूक्ष्मेक्षिकया निरीक्षणे भेदाभेदरूप एव। अतः तत्रापि सबन्धकथने पूर्वोक्तदोषास्तदवस्थाः।





अपि च ईश्वरस्य कृते दुःखसहनमेव प्रेमरूपमिति चेत्, एतदपि वल्लभमतं न युक्तं यतः तथाचेत् प्रेमी कामुकश्च समौ भवेताम्। विषयाणामीश्वरस्य च साम्यमेव भवेत्। अपि च जीवे दुःखसहन-सामर्थ्या-भावात् सुखार्थमीश्वरस्य शरणं गन्तव्यं भवेदिति। यद्यपि पूर्वं तादृशंसामर्थ्यं भक्तैर्दर्शितं तदपि अद्वैतज्ञानत एव घटते नान्यथा। विषम-सत्तायामेव दुःखमिति हेतोः ईश्वरार्थं दुःखसहनमिति चेत् तर्हि ईश्वरोऽपि दयास्वभावात् दुःखं न दद्यात्। जीवः सहेत परमात्मा च दुःखं दद्यात् इति चेत् तत्र जीव एव श्रेष्ठो भवेत् न त्वीश्वरः निर्दयत्वात्। दुष्टस्य पत्युर्हस्ते गता पतिव्रता यथा यशो यायात् न तु तस्याः पतिस्तथा। यदि स्वभक्तिरहिताय जीवाय (परमात्मा) नारायणो दुःखं दद्यात् तर्हि तस्य परमात्मनो गुणाः मुक्तितो श्रेष्ठा न भवेयुः।

**आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।**
**कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः।।**
**(भागवते-1/6/10)**

इति हि शुकमुनिवचनम्। अस्यायं भावः -

ज्ञाने जातेऽपि वासनानां पूर्णनाशेऽपि श्रीमन्नारायणगुणाः निष्कामभक्तिपुरस्कारका भवन्ति। ज्ञानोदयात् पूर्वकालीनाः दास्यादिभावाः सकामास्ते सर्वेऽपि ज्ञानोत्तरं निष्कामा भवन्ति स्वयमेव।

अद्वैते आहार्यद्वैतमाश्रित्य भजनादिषु प्रवृत्तः मधुराद्वैतमाश्रित्य मुक्त्यपेक्षया श्रीमन्नारायणगुणा एव वरिष्ठा इति बुध्येत्। तथाहि भागवते - (7-9-11)

**नैवात्मनः प्रभुरयं निजलाभपूर्णो**
**मानं जनादविदुषः करुणो वृणीते।**

**यद् यज्जनो भगवते विदधीत मानं**
**तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः।।**

भगवानपि अज्ञजीवेभ्यः मोक्षार्थं स्वपूजार्चनादिकं न कामयते स्वस्य नित्यतृप्तत्वात्, एकत्वात् अद्वितीयत्वाच्च। यो जगत्प्रभुः सदातृप्तश्च स किमर्थं स्वपूजादिकं कामयेत? तथापि दयावशादेव देवः सर्वमनुमोदते। वस्तुतः भगवतः पूजैव न संभवति। यतः-

**पञ्चाशद्योजनानां वै दिव्यां धारयतस्तनुम्।**
**शेषस्योपरि निद्राणं चन्दनेनार्चयेत् कथम्।।14।।**

**क्षीराब्धेरपि शुभ्रस्य वस्त्रस्य क्षालनं कथम्।**
**शशाङ्कसूर्यनेत्रस्य नेत्रयोरञ्जनं कथम्।।15।।**

**चराचरस्य वाऽप्यत्तुर्नैवेद्यं केन शक्यते।**
**यज्ञाहुतं समादत्ते गोपदत्तं समश्नुते।।**
**सममेव सदातृप्तः प्रेममात्रवशीकृतः।।16।।**

**तं शेषशायिनं ताम्रे पात्रे वा वासयेत् कथम्।**
**कौस्तुभाभूषणं दिव्यं काचेन भूषयेत् कथम्।।17।।**

**क्षीराब्धिशयनं वाऽपि स्वपदोद्भूतजाह्नवीम्।**
**पञ्चामृतादितोयेन स्वल्पेन स्नपयेत् कथम्।।18।।**

**वैजयन्ती क्व सा माला गुञ्जाहारः क्व वाऽल्पभः।**
**क्व वाऽमृतपयःपानं क्व नवनीतभक्षणम्।।19।।**

**स्वपादप्रणमद्देवमुकुटरत्नराजितः।**
**देवोऽपि वर्हभूषेण नित्यं लसति सुन्दरः।।20।।**

**सर्वदाऽप्याप्तकामोऽयं सेवां भक्तकृतां प्रियाम्।**
**अनुमोदते तदर्थं हि तत्पापक्षालणाय ताम्।।21।।**

अपि च -

**अतस्ते मत्परा भक्ताः सायुज्यभाज एव मे।**
**उपचारमिषेणाऽपि मय्यर्पितस्वजीवनाः।।22।।**





**मय्यहंभावनान्यासफलं मद्दर्शनं प्रियम्।**
**उपचारादिना नाऽहं प्राप्तुं शक्योऽस्मि केनचित्।।23।।**

**न्यूनता ज्ञानमत्र स्यात् गर्वो वा दम्भतः कृतः।**
**कृतार्था वयमित्येतच्चिन्तनं न्यूनतां नयेत्।।24।।**

**अथवा यज्ञदानादि तपः कर्मादिकं बहु।**
**न तृणायावकल्पेत मत्पुरो गर्वकारिणाम्।।25।।**

**वेदेभ्योऽपि परं ज्ञानं शेषाद् वा वाग्मिता परा।**
**कस्य स्यात् पार्थ लोकेऽस्मिन् मनुजस्य मितायुषः।।26।।**

**शेषो मच्छयनं जातो वेदोऽपि मूक्तां गतः।**
**सनकादिमहर्षीणां मोहो जातो मदन्तिके।।27।।**

**तपस्विनां वरः शम्भुः गङ्गां मत्पादसम्भवाम्।**
**निर्गर्वः शिरसा धत्ते सोऽयं मे महिमार्जुन।।28।।**

**अथवा सदृशो लक्ष्म्या लोकेऽस्मिन् कोऽस्ति पार्थिव।**
**सम्पत्तौ सा श्रिया जुष्टा दासीत्वेन स्वयं रमा।।29।।**

**खेलन्त्या च श्रिया नूत्नाऽमरावतीति पूः कृता।**
**इन्द्रादिदेवतास्तत्र क्रीडन्ति तच्छ्रिया युताः।।30।।**

**तस्याः क्रीडासमाप्तौ हि रङ्कः सर्वाश्च देवताः।**
**तस्याः कटाक्षमात्रेण वृक्षः कल्पद्रुतां व्रजेत्।।31।।**

**दासीत्वं भजते लक्ष्म्याः या स्वयं श्रीर्महाधना।**
**सा लक्ष्मीर्गर्वशून्या मे पादसंवाहने रता।।32।।**

**अहङ्कारं बलं दर्पं ज्ञानं सामर्थ्यमेव च।**

**परित्यज्य नरोऽगर्वो भक्त्या मां प्राप्नुते ध्रुवम्।।33।।**

**चन्द्रमा निष्प्रभः साक्षाद् पुरस्ताच्चण्डदीधितेः।**
**वराकस्तत्र खद्योतस्तेजोगर्वं कथं वहेत्॥34॥**

**न लक्ष्म्या यत्र माहात्म्यं शम्भोश्च तपसो न वा।**
**तादृशं मां कथं वाऽल्पो जानीयात् प्राकृतो नरः॥35॥**

**देहाभिमानमुत्सृज्य गर्वं गुणकृतं तथा।**
**संन्यस्य सर्वसम्पत्तिं मयि शान्तो भवेन्नरः॥36॥**

इत्यादिना हृदयाचार्यवचनैः निरभिमानसेवास्वरूपं प्रकटितम्। देवो हि नित्यतृप्त इति यदि जीवो न सेवापरस्तदा आसुरत्वं स्यात्। राजा संम्पन्न इति यदि प्रजा करं न ददाति चेत् सा प्रजा दण्डमर्हति। चौर्यमेव तत् एवंविधं सेवाचौरं यमो दण्डयति। पत्रं पुष्पं फलं तोयमिति किञ्चिदल्पमपि भगवते अर्पितं चेदेव अनन्तफलं ददाति। आजीवनं सेवाश्रमो वोढव्यः। एवं कोटिकल्पपर्यन्तमपि कृतः श्रमः परमात्मनः पुरस्तादल्प एव।

**पत्रं पुष्पं फुलं तोयं यो मे भक्त्या प्रयच्छति।**
**तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः॥**

इति गीतासु भगवदुक्तेः स्वल्पमपि भक्त्या समर्पितं करुणाधनः भगवान् स्वीकरतीति बुध्यते।

**शिलातलस्थितो हीशो वयं पर्यङ्कशायिनः।**
**पायसान्नं वयं भुक्त्वा तस्मै दद्मो जलं यदि॥37॥**

**न सा सेवा भवेत् श्रेष्ठा दाम्भिकं कर्म केवलम्।**
**अन्तःप्रेमगृहीतात्मा सेवालभ्यो हि माधवः॥38॥**

**मनसा कर्मणा वाचा निर्दुष्टसेवया हरिः॥**
**सुसन्तुष्टः प्रसन्नात्मा भक्तकामप्रदो भवेत्॥39॥**

**क्षुधार्तो ह्यमृतं प्राप्य यथा नन्देन्नरस्तथा।**
**भक्त्यर्पितं च संप्राप्य पत्रं नन्दामि पार्थिव॥40॥**





**तेनैव पत्रमात्रेण नानन्दीमि भृशं यथा।**
**क्षीराब्धौ सर्वसम्पन्नो नन्दितः स्याद् यथा नरः॥41॥**

**अतो मम वचो भक्त्या पार्थ त्वमधारय।**
**प्रमादादपि मोहाद् वा मा त्वं मां विस्मरेः क्वचित्॥42॥**

## भक्तिरीश्वराधीना

**भक्तिं ददाति सर्वेशो भक्तिं रक्षति सर्वदा।**
**अतो हि सेश्वराधीना शुद्धा भक्तिः प्रियेशितुः॥43॥**

**अगर्वपूर्विका भक्तिः केवला प्रेमचोदिता।**
**श्रेष्ठतां याति सर्वेषु न गर्वपूर्विका पुनः॥44॥**

**भाति प्रेमकृतो गर्वो न कृतं प्रेम गर्वतः।**
**इत्यतः प्रेम गोविन्दे भक्त्यैव क्रियतां सदा॥45॥**

**मय्यर्पितमनोबुद्धिं भक्तं रक्षामि सर्वदा।**
**योगक्षेमौ तदीयौ मे कर्तव्यौ सर्वदाऽर्जुन॥46॥**

**इत्येवं हृदयाचार्यश्रुतिर्जागर्ति यत्पुरः।**
**सैव भक्तवरः प्रोक्तो स एव च भक्तिरक्षितः॥47॥**

अपि च -

**"मुख्यतस्तु महत्कृपयैव भगवत्कृपालेशाद् वा"**

इति भक्तिसूत्रोक्तिसमन्वयः करणीयः। अत्र महतां कृपातो भगवतः कृपातो वा प्रेमजन्मा? इति विकल्पः। तुकारामादिसत्पुरुष-वचनैः ज्ञायते यदत्र महत्कृपाया निषेधो न कृतः। अतो भगवानेव महतां द्वारा रक्षतीति बोध्यम्।



ननु भक्तिं विनाऽपि कुतो भक्तिं न दद्याद् इति चेत् मूर्खप्रलपनम् एतत्। भगवता तु आत्मप्रेमनिधिरेव जीवाय प्रदत्तः। जीवश्च

मूढतावशात् देहे तत् प्रेम कुरुते। अत्र कस्य दोषः? तथाऽपि यथा यथा प्रार्थना क्रियते तथा तथा प्रेम समेधते इत्यतो भगवानेव प्रेमसंबन्धं पुष्णातीति बोध्यम्।

दैत्यपुत्रमपि प्रह्लादं भगवान् स्वाङ्कं नारोपितवान् किम्? यशोदावत्सलः भागवानिति सा गोवर्धनोद्धहरणे तमुपलालयति स्म यथा -

**ब्रह्माण्डनेतुर्जननीति वक्तुं**
**जिह्नेमि नूनं जगतां शरण्य।**

**त्वमेव माता च पिता त्वमेव।**
**त्वमेव बन्धुर्मम रङ्ग रङ्ग।।**

इति श्रीधरकृतहरिविजयवर्णने लालनवात्सल्यं यशोदायाः। एवं वात्सल्ये लालनं पूर्णतो घटते। माधुर्येऽपि परिपूर्णं यथा रुक्मिणी। स्वयंवरप्रसङ्गे रुक्मिण्याः पत्रिका। इदं स्वकीयनायिकायाः माधुर्य भक्तौ लालनभक्तिः। परकीयनायिकायाश्च यथा गोपीगीते। लालन-प्रेमरूपा सकामा वात्सल्यमाधुर्यादिरूपा च निष्कामा इति विवेकः।

## ईश्वरस्य दयालुता

यथा मुखस्य अलङ्कारेण दर्पणे मुखप्रतिबिम्बस्य शोभा भवति न तु साक्षात् प्रतिबिम्बस्यालङ्करणं शक्यं तथा मिथ्याजीवैः सह प्रेमसङ्कल्पेन तेषामेव अभिमानभरो वर्धते। अतः सर्वाऽपि प्रेमपूजा जीवेन ईश्वरे समर्पणीया। मुखरूपस्येश्वरस्य शोभया जीवरूप-प्रतिबिम्बस्य शोभा भवति। ईश्वराय समर्पितं क्षुल्लकमप्यासनं जीवस्य कृते वैकुण्ठकारणं भवति। सर्वेषां जीवानां सुलभा भवतु मुक्तिरिति दयाघनो भगवान् स्वनाम प्रदत्तवान्। प्रतिमारूपे निश्चला भवतु समर्चनेति भगवान् प्रतिमारूपं समादत्ते। मम चञ्चलत्वे प्रणतिस्य ध्यानं न घटेत इति तस्य भावना। परन्तु प्रतिमाया ध्यानं न साक्षात्काररूपमिति





मन्वानो मूर्खो हि प्रतिमार्चनं परित्यजति वस्तुतस्तत्रापि स्वप्रयत्नेन साक्षात्कारः शक्यः।

## ईश्वरसाक्षात्कारस्य मार्गः

'स्वप्ननिद्राज्ञानालम्बनं वा' इति सूत्रेण (1- 38) योगशास्त्रेऽपि युगचतुष्टयेऽपि ध्यानमिव स्वप्नोऽपि निश्चितसाधनरूपेण कथितः। स्वप्नस्य तुच्छत्वभावनां विना साधनत्वभावनास्वीकारः योग्यः तथा नारायणप्रतिमादिषु तुच्छत्वभावना न कार्या। व्यावहारिके सर्वस्मिन्नपि विषये तुच्छदृष्टिरेव। तथाऽपि व्यावहारिकप्रपञ्चे मृत्तिकादर्शनात् मृदुसंवेगेनेव स्वप्ने च मध्यसंवेगेन मृद्दर्शनम् तथा जागरायां तीव्रसंवेगेन पुनर्दर्शनमिव, भगवतोऽपि तीव्रसंवेगेन दर्शनं भवतु प्रतिमायामपि।

ध्याने स्वप्नदर्शनं न सर्वथाऽपार्थकम्। तत्सजातीयफलप्राप्तेः। स्वप्नदर्शनमात्रेण असन्तुष्टः तीव्रसंवेगेन जागरायामपि तद्दर्शनम-वाप्नुयात्। एवं प्रतिदिनम् अनुभवे प्राप्ते तुष्टिर्भवति। परं तावताऽपि न सन्तुष्टः सन् अशिथिलयत्नः स्यात्। एवं जागर्यायां स्वप्नेऽपि वा एकानुभवप्राप्तिरेव साक्षात्कार इति भावः।

स्वप्नश्च द्विविधः। निद्राजन्यः शिथिलिताङ्गासनस्थध्यानजन्यश्च इति। तत्र निद्राजन्यस्वप्नो मध्यसंवेगः, द्वितीये च उत्तमसंवेग इति विवेकः। यथाधिकारमत्र साधकेनानुष्ठानपरेण भाव्यम्। एवंविधयोग-साधने 'स्वप्ननिद्राज्ञानालम्बनं वा' इति सूत्रं प्रमाणम्। अपि च कलियुगेऽपि भगवतः प्रत्यक्षदर्शनं शक्यमिति बोध्यम्। परिपूर्णसुन्दररूपे भगवति समर्पिता मानसपूजा अस्मिन्नेव लोके फलवती भवति।

मानसपूजायामस्यां जागरायामपि स्वयं राधिका भूत्वा नाट्यादिना परमेश्वरं तोषयेत्। ईश्वरस्य स्वयंज्योतिःस्वरूपत्वात् सर्वत्र विद्यमानता स्वातन्त्र्यञ्च तथापि भक्तौ स्वातन्त्र्यं भवेदेव। जागरायाम् ईश्वरपरतन्त्रस्य जीवस्य कर्मतः अणुमात्रमपि मृदुसंवेगमनुमोदते भगवान्। ततश्च स संवेगो भवति तीव्रः। एवमीश्वरकृपया व्यावहारिक-प्रातिभासिक-

सत्ताद्वयेऽपि अभेदेन परमेश्वरो भक्तमनुगृह्णाति। अन्यथा शालग्रामेऽपि विष्णुभावना कथं स्यात्? प्रातिभासिकत्वेऽपि भगवतोऽपरोक्षज्ञानस्य न भ्रमत्वमिति विद्यारण्यस्वामिनः।

कथमपरोक्षज्ञानं प्रातिभासिकं स्यात्? अतः यदधिष्ठानं अवस्थाद्वयेऽपि समानं न तत्र व्यावहारिक-प्रातिभासिक-कल्पना योग्येति भावः।

यद्यपि मानसपूजायाः फलं स्वप्नभोग्यमिति नीलकण्ठवचनं तथाऽपि ततो न तस्य तुच्छत्वम् अपि तु प्रापञ्चिकविषयत्वादेव। ईश्वरविषयकमानसपूजायास्तु जागरायामेव फलजनकत्वम्। अतः स्वप्नलब्धा ईशप्रसादरूपा गुरुमन्त्रा अपि यथार्था एवेति शङ्कर-भगवत्पादानां शतश्लोकीग्रन्थे भाष्येऽपि। काम्यकर्मसु क्रियमाणेषु स्वप्ने योषिद्दर्शनं समृद्धिसूचकमिति श्रुतिरत्र प्रमाणम्। तादृशः स्वप्नो न निरर्थकः अपि तु अन्यार्थकः। एवं मानसपूजाविषये सर्वदौर्बल्यशङ्का निरस्ता वेदनीयाः।

एवं कस्यामप्यवस्थायामीश्वराभेदेन असङ्गबलेन अद्वैतेऽपि सेवा शक्येति शम्।

## ज्ञानोत्तरम् आहार्यद्वैतम्

यद्यपि युक्तिदृष्ट्या द्वैतपक्षे युक्तस्य सेव्यसेवकभावस्य अद्वैते विरोधस्तथाऽपि आहार्यद्वैतस्वीकारेण अद्वैतज्ञाने न कोऽपि विरोधः। द्वैतसत्यत्वे खलु अद्वैतज्ञानविरोधः। जीवन्मुक्तावपि प्रारब्धभोगस्तावद् अनाहार्य-बाधितानुवृत्तिकर्षणेन। अतः आहार्यद्वैते भगवान् रुक्मिणीरमणः सेव्यः। ननु आहार्यद्वैतस्थले न कोऽप्यानन्दः? इति चेत्; न; वृत्तिभेदेऽपि स ब्रह्मानन्दोऽस्ति किम्? वृत्तिभेदेन सच्चिदा-नन्दत्रितयं पृथग् भासत इति पद्मपादाचार्याः। वृत्तौ द्वैतं स्वीकृतं चेद् भक्तौ किमर्थं न? अतो जीवन्मुक्तौ द्विविधमपि द्वैतम् आहार्यमेव (वृत्तिद्वैतं भक्तिद्वैतमिति)। ननु भगवन्। द्वैते वृत्तिस्थेनानन्देन





प्रयोजनसिद्धौ तदन्याहार्यद्वैतस्य प्रयोजनं किम्? इति चेत्; सत्यमेव। तथापि व्युत्थाने वृत्तिस्थानन्दद्वैतस्य ग्रहणेन अहम् आनन्दरूपम् इति अहङ्कारः स्फुरति। स व्युत्थाने पीडयति न समाधाविति विवेकः।

अतः सगुणं श्यामसुन्दरं यशोदानन्दनं दीनोद्धारकं गोगोपवत्सलं परमोदारम् आहार्यद्वैते सेवन्ताम्।

**बिम्बं हि प्रतिबिम्बस्य द्योतकं भवति ध्रुवम्।**
**बिम्बस्य प्रतिबिम्बञ्च भवत्येवानुमापकम्।।48।।**

**एवं हि द्वैतभानेऽपि चा द्वैतमेव शिष्यति।**
**भासमानमपि द्वैतं न द्वैतसाधकं भवेत्।।49।।**

इति तातपादाः ज्ञानेश्वरचरणाः। (1-26)

प्रकृतिपुरुषप्रकरणेऽस्मिन् जीवस्य ब्रह्मप्रतिबिम्बत्वदृष्टान्तकथनेन जीवस्य सृष्टिकारणत्वमपि कथितमेव।

**अविद्याऽवर्तविभ्रान्तं जन्मकोटिशतं गतम्।**
**जीवमुद्धर्तुमायाति गुरुरेकः स्वयं प्रभुः।।**

इति गुरुमहिमा वर्णितः।

अत्र तातमते मायानङ्गीकारात् शाङ्करमताद् भेद इति केचन ब्रुवते तत् सर्वथा मिथ्याप्रलपनम्। ज्ञानेश्वर्याः पञ्चदशाध्यायस्य सप्तमश्लोकविवरणप्रसङ्गे तातचरणैरवच्छेद-आभास-प्रतिबिम्ब-दृष्टान्तमुखेन जीवविषये निरूपणं कृतम्।

एवं मायाऽप्यङ्गीकृतेति, तातपादानां शाङ्करमतविरोधकथनमपि अविचाररमणीयमेव। मायाया अनङ्गीकारे तातपादानामपि मतं वल्लभमतस्यैव प्रकारो भवेत्। परन्तु तत् भावार्थदीपिका-अमृतानुभव-समन्वयेन विरुध्यतीति हेतोर्वयं तन्न शुद्धं मन्महे। अपि च सनातनमिदं केवलाद्वैतं श्रुतेर्योगवासिष्ठादि प्रमाणतः।

अतः केवलाद्वैतस्य सनातनत्वेन न कस्याप्येकस्य तत्। तथापि मायायाः स्वीकारेण जगन्मिथ्यात्वे, अद्वैतप्रतिपादनेन च

भक्तेरनावश्यकत्वेन च संप्राप्तं शुष्कत्वं दूरीकर्तुमेव तातपादानां प्रयास इति बोध्यम्।

**विना हानिं स्वरूपैक्ये द्वैतसौन्दर्यमस्ति चेत्।**
**स्ववीचिमुकुलानां किं लाभं न प्राप्नुयाज्जलम्।।51।।**

**यदि पर्वतमुत्कीर्य देव-मन्दिर-कल्पनम्।**
**तथा चेद् व्यवहारेऽत्र भक्तेः का हानिरुद्भवेत्।।52।।**

## वृत्तिदृष्ट्या माधुर्यभक्तेः श्रेष्ठता

ज्ञानोत्तरभक्ति-प्रतिपादनेन वेदान्तसंप्रदाये मधुराभक्ति-संप्रदायेन अभूतपूर्वः कश्चन महानुपकारःकृतः। एवम् आहार्यांशरूपः तस्यैवाहमिति संबन्धः आदौ ग्राह्यः ततः परं वात्सल्यभावना कार्या। भगवतः कृपाऽऽदेशो वेदः। तत्रैव सिद्धज्ञानम्। तदेव च ज्ञानं वैकुण्ठप्राप्तिहेतुः। भक्तिप्राप्तये भगवन्मन्दिरं प्रति प्रस्थानमावश्यक-मिति तुकारामादिप्राचीनसत्पुरुषाः। अतः आत्मैक्यरूपस्य ज्ञानस्याधारेण स्वमिसेवा विधीयते। शिवो भूत्वा शिवं भजेदिति श्रुतिः, ज्ञानी त्वात्मैव मे मतम् इति जाग्रच्छ्रुतिः, आत्मबुध्या त्वमेवाहमिति च स्मृतिः स्वाम्याज्ञया निश्चितसेवैव पूर्वं करणीया ततो भगवान् मुक्तिं प्रदाय ऋणमुक्तो भवतीति दर्शयन्ति। ब्रह्म मायाऽधिष्ठानमिति ज्ञानेन मायाया ब्रह्मणश्च अविरोधः साध्यो भवति। ज्ञानेनैक्यलाभश्चेदपि वृत्त्या दासभावः श्रेष्ठः। एवं भक्तस्यैव श्रेष्ठत्वम् अन्येषाञ्च विभक्त-त्वमिति स्फुटम्। स मे वल्लभ इति भावना तातपादैर्दर्शिता। एवं ज्ञानोत्तरभूमिकासु लालन-वात्सल्य-माधुर्यरूपाः निष्कामकर्मणः सुखातिशयेन क्रमशोऽधिगम्यन्ते। ज्ञानेनैक्यप्राप्तौ या भक्तिः सैव मधुराभक्तिरिति सारः।

महाभारतेऽपि माधुर्यविषये काचिदस्ति कथा। स्त्रीपुरुषयोः कस्य वाऽधिकं सुरतसुखमिति युधिष्ठिरेण पृष्टो भीष्माचार्यः स्त्रीणामेवेति







समादधौ। तस्यायं समन्वयः। विषयसुखदृष्ट्या समर्पणभावनावशात् स्त्रीणामेव सुरतसुखमधिकमिति। एवं ईश्वरं प्रति माधुर्यभावनातः सुखमधिकमिति बुध्यते।

समाधौ वृत्तिहीनं मनः कृत्वा ऐक्यमासादितम्। व्युत्थाने च वृत्तिद्वारा माधुर्यसुखमासादितम्। इत्येवं पूर्णं निर्गुणब्रह्म जीवत्वं विनाऽपि गुणभोक्तृ जातम्।

''निर्गुणं गुणभोक्तृ च'' इति भगवता गीतास्वभिहितम् प्रकरणवशात् तद् ब्रह्मविषयकं न तु जीवविषयकम्। परन्तु निर्गुणस्य गुणभोक्तृत्वे जीवत्वमायातमेवेति विरोधः। निर्गुणब्रह्मण्यधिष्ठाने गुणभोक्तृता न संभवति। अतोऽत्र माधुर्यभक्त्यैव गुणभोक्तृत्वं शक्यम् इति समन्वयः योग्यः।

पत्न्याः प्रारब्धरूपतमोगुणश्चेत् तदवच्छिन्नदेहेन भगवदालिङ्गनं, पत्न्याः कामरूपरजोगुणश्चेत् तत्काम्यरूपफलं भगवानेव, पत्न्याः पातिव्रत्यरूपसत्त्वगुणश्चेत् तत्र पतिरूपो भगवानेव एवंरीत्या निर्गुणमपि ब्रह्म माधुर्यदृष्ट्या गुणभोक्तृ भवति। चिन्मात्रं भगवान् अनध्यस्त-विवर्तरूप इति भगवति निर्गुणेऽपि भोक्तृदृष्टिरपि सुखावहा इति सारः।

सर्वगुणैश्च यस्य महिमातिशयः तं प्रति श्रेष्ठप्रियेति भावना चेत् स भवति भगवान् धीरोदात्तः। ''विवक्षितगुणोपपत्तेश्च'' इति शारीरकसूत्रेण (1-2-2) इदमेव दर्शितं यत् प्रियायाः प्रेमवशात् भगवान् धीरोदात्तो भवतीति।

सर्वेषां विरुद्धगुणानामतिविरुद्धभावनया जगत्कल्याणमपि साध्यते। तत्र हेतुर्भगवतः महिमातिशय एव। स भगवान् उत्तमप्रियानुकूलो धीरोदात्ततां भजत्येव।

जीवस्य तु अविद्याकामकर्मबद्धत्वान्न धीरोदात्तता। अतो भगवानेव अनध्यस्तविवर्तरूपेण धीरोदात्तनायक इति निर्गुणं गुणभोक्तृ च इति वाक्यस्य परमाशयः।

अथ नायिकयाऽपि निर्विकारया भाव्यमिति ज्ञानोत्तरा भक्तिरेव समाश्रयणीया। एवं हि सगुणे निर्गुणेऽपि न विरोधः। एवं भगवतो भक्तस्य च पति-पत्नीरूपसंबन्धवशात् सर्वमिदं विश्वं भक्तस्य पुत्ररूपेण विलसति।

तादृशो भक्तः स्वपुत्रं प्रति दययाऽक्रान्तहृदयः स्वयमधिकारी भूत्वा तरणोपायमुद्घाटयति।

एवम् ऐक्यमासाद्याऽपि तत्त्वतः पारतन्त्र्येणाधिकसुखभोगः कथमिति विरोधं पतिव्रतामन्तरा नान्यो विज्ञातुमीष्टे। स्वतन्त्राऽसि त्वम् इति वचनमात्रेण मुदिता भवेद् व्यभिचारिणी। एवं ज्ञानाभिमानेन ज्ञानी शब्दपाठमात्रतो भक्तिरहितः अहङ्कारवान् भवति। भक्तस्तु न तथा। भक्तः पातिव्रत्यधर्मतो भगवन्तं विना नान्यमर्थं जानातीति सर्वोऽपि कामः एकाग्रप्रेमणि समापन्नः। ऐक्येण मोक्षस्थितिं संसाध्य वियोगोपलालनतः दीनतामासाद्य संयोगे पञ्चमपुरुषार्थरूपां भक्तिं साधयति भक्तः।

**या काचिच्च स्थितिः तस्यै प्रदेयाथ मयाऽर्जुन।**
**सहजां तां हि निःसीमां पूर्वमेवाप्तवान् स्थितिम्।।53।।**

**अतो भक्तेन संप्राप्तं प्रेम महत्तमिति स्थितम्।**
**मयाऽपि प्रेम तद्देयमित्यपि तेन वै कृतम्।।54।।**
**(ज्ञानेश्वरी 10-131,132)**

इति तातपादोक्तिर्मम हृदि स्फुरति।

**इति मधुराद्वैतसिद्धौ तृतीयं प्रकरणम्**

★★★★





**अथ सेवातत्त्वनिरूपणम्**

अथ सेवातत्त्वं निरूप्यते। तत्र सेवा त्रिविधा अद्वैते द्वैतसेवा, संयोगे वियोगोपलालनसेवा गुणार्पणयुक्ता चेति। तत्र जीवन्मुक्तौ व्युत्थाने द्वैते या द्वैतसेवा सा प्रथमा। इयञ्च अद्वैतेऽपि द्वैतं कथमिति अनध्यस्तविवर्तमिषेण बहुधा मया प्रपञ्चितम्।

**विना हानिं स्वरूपैक्ये द्वैतसौन्दर्यमस्ति चेत्।**
**स्ववीचिमुकुलानां किं लाभं न प्राप्नुयाज्जलम्।।55।।**

इति तत्र तत्र श्रुतिविशेषेणाभिहितं मधुराद्वैतग्रन्थाध्ययनेन सज्जना विदांकुर्वन्तु।

अथ द्वितीया संयोगेऽपि वियोगोपलालनरूपा। इयमपि बहुधा प्रपञ्चितचरा। संयोगेऽभिमानसत्त्वे तु गर्ववृद्धिस्तेन सेवानन्दन्यूनता इति महदनर्थकारणम्। अभिमानवती सत्यभामा श्रीपतिमेव दानरूपेण प्रददौ। एवं संयोगाभिमानेन सेवानन्दनिवृत्तिरेव भवति। अयं वियोगोऽपि सप्रेम-सापराधरुपेण द्विधा। गोविन्दे वनं प्रति प्रस्थिते गोपीनां गृहे वियोग इति प्रथमः। अपराधस्त्रिविधः मानजदैवजप्रमादजभेदात्। मानजो यथा रासलीलायां गोपीनाम्। तदपराधेन च भगवद्वियोगः। रुक्मिणीं प्रति दुर्वाससः शाप इति दैवजः। दैवं नामालौकिकः संकल्पः। दैवप्रकोपकारणम्। स च प्रकोपः स्वापराधेन वा दैवस्वभावेन वा। यादवान् प्रति मुसलशापः स्वापराधजन्यः। यथा वा सांबं प्रति समाकृष्टाः स्वयोषिदः प्रति श्रीकृष्ण शापः। स्वप्रमादजोऽपराधः सदनुग्रहं विना कल्पकोटिशतैरपि न निवर्तते। गालवानुग्रहेण खलु कृष्णस्त्रीणां सर्वासामापि वैकुण्ठगतिरभवत्। स्वभाववियोगेऽपि सत्समागम एव तारकोपायः। अन्यास्तु संशयस्थानतां भजन्ति।



**अन्धानां हस्तदण्डास्ते पङ्गूनां हस्तयष्टयः।**
**संसाराब्धिनिमग्नानां सन्त एव हि तारकाः।।56।।**

**दुर्बलानां बलं सन्तोऽक्षयपात्रं प्रवासिनाम्।**
**कामधेनुर्दरिद्राणां सन्तः सर्वोपकारकाः।।57।।**

**विचारसागराः सन्तः सन्तो वैराग्यशेवधिः।**
**सत्संगत्याऽपि तीर्णा नेति न दृष्टं न वा श्रुतम्।।58।।**

**ईश्वरो जनकः सन्तो जननी भुवि साधवः।**
**पाषाणादिषु सर्वत्र तद्वाक्याद् भगवान् स्वयम्।।59।।**

अतः संयोगे वियोगे वा सज्जनप्रीतिरेवास्तु। स्त्रियं प्रति कृष्णापराधे गालवो महामती रक्षिता बभूव। सांबं प्रति च नारदापराधे भगवान् स्वयं तारको भूत्वा विललास। प्रत्यक्षभगवदपराधे साधुः स्वयं स्वबलेन रक्षतीति बहुधा श्रूयते। प्रत्यक्षञ्च साधूनामपराधे भगवान् सतां द्वारा रक्षतीति च विश्रुतमेव।

अथ निद्रासमाधौ वियोगोऽपर एव भक्तिसमाधिरिति ख्यातः। प्रारब्धस्य कथेयं यद् भोगानां भोगकाले वियोगहानिर्भवति। तस्यापि भोगस्य भगवदर्पणे तु व्युत्थानदशायामपि मनसो भगवदाविष्टतया समाधिसुखलाभ इति रहस्यम्।

व्यतिरेकसमाधौ निर्गुणे परात्मनि मनसः सुखप्रवेशस्तथाऽपि व्युत्थाने पुनः प्रारब्धभोगेन दुःखसंभवः इति व्युत्थानेऽपि भरक्तिसमाधिराश्रितश्चेत् प्रारब्धाभिभवः सुशक्यः। एवमपि भक्तिसमाधितोऽपि व्युत्थाने पुनः प्रारब्धाभिभव इति सर्वदा भगवत्सेवापरत्वमुपायः।

## संयोगे वियोगोपलालनम्

एवं सप्रेमवियोगेऽपि अन्तर्भगवन्तमेव प्रतिष्ठाप्य स भोक्तव्यः। बाह्यसंयोगे तु भगवत उपलालनं कर्तव्यम्।

**उपलालनन्तु शास्त्रोक्तं दृष्टे विश्लेषभीरुता।**
**संयोगमन्तरा सेवा कथं सेव्यस्य संभवेत्।।60।।**





**आदौ सेव्यस्य तत्त्वेन वियोगे भावना कृता। 61।।**
**परन्तु सेव्यसंयोगे नियोगेच्छा प्रदर्शिता।।**

**एवं चेदपराधः स्यात् सेव्यस्यैवापमाननम्।**
**बलात्कृतवियोगेच्छा सेव्यस्य शत्रुतां वहेत्।।62।।**

**वियोगे च वियोगेच्छा कृता चेत् तर्हि माधवे।**
**चित्तावेशः कथङ्कारं भवेद्वा परमेश्वरे।।63।।**

**संयोगस्योत्कटेच्छायाः स्याद् वियोगोपलालनम्।**
**संयोगक्षणनिष्ठस्य संयोगे शक्यसंभवम्।।64।।**

**संयोगविघ्नभूतानां कल्पनामात्रतो भवेत्।**
**सेव्यविश्लेषणभीरुत्वं तद् वियोगोपलालनम्।।65।।**

**गोप्यश्च कृष्णमुपलभ्य चिरादभीष्टम्**
**यत्प्रेक्षणे दृशिषु पक्ष्मकृतं शयन्ति।**
**दृग्भिर्हृदीकृतमलं परिरभ्य सर्वाः**
**तद्भावमापुरपि नित्ययुजां दुरापम्।।**

सहजतया नेत्ररक्षणार्थं भगवता नेत्रपक्ष्मनिर्मितिः कृता। परन्तु पक्ष्मकारणेन भगवत एव दर्शने विघ्नो जातश्चेत् गोप्यो न सहन्ते। एतदेव भक्तौ क्रोधसर्मपणम्।

**नेत्रद्वारा मनःपद्मे पूर्णः संस्थापितो हरिः।**
**एवं हि गोपिका जातास्तद्रूपाः शुद्धमानसाः।।66।।**

**एतदेवात्र संयोगे तद्वियोगोपलालनम्।**
**संयोगानपमानेन वियोगस्योपलालनम्।।67।।**

## भगवत्प्रीतेरधिकसुखप्रदत्वम्

विषयप्रीतेरपेक्षया भगवद्भक्तेरेव अधिकसुखप्रदत्वम्। ये चाऽपि नित्ययोगिनस्तेऽपि भवभीतिवशात् क्रियाश्रयपूर्वकमेव मनःसमाधानाय

यतन्ते। अतस्तेषां भगवत्प्राप्तिः सुदुर्लभा। भगवद्भक्तिस्तु न तथा। भक्तौ भगवद्भक्ताः भगवत्प्राप्त्यै बहुविधकष्टमपि सहन्ते परमेश्वर प्रीतिवशात्। अतो भक्तस्य कृते सुलभो नारायणः एतदपि विषयप्रीतिसमानमेव दृश्येत तथापि भक्तौ प्रीतिवशात् विषया एव परित्यज्यन्ते।

**या प्रीतिरविवेकानां विषयेष्वनपायिनी।**
**त्वामनुस्मरतः सा मे हृदयान्माऽपसर्पतु।।68।।**

इति हि प्रह्लादोक्तिः।

**जीवने मृत्युकालेऽपि प्रियस्य पादसेवनम्।**
**प्रियपादापरित्यागो ह्यनुरागस्य लक्षणम्।।**

विष्णुपुराणेऽपि कथितम् -

**नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहम्।**
**तेषु तेष्वचला भक्तिरच्युताऽस्तु सदा त्वयि।।**

**एवं प्रारब्धदुःखमपि सुसह्यं भवत्यनुरागप्रभावतः।**

**जनित्वा वेणुजातौ हि मुरलीधर तावकः।**
**मुरलिर्भवितुं वाञ्छा तथा ते करसङ्गमः।।69।।**

**सर्वं ब्रह्ममयं विश्वं चिदचिदात्मकं खलु।**
**द्वेषः पुनः किमर्थं नो जन्मप्राप्तौ वृथा भवेत्।।70।।**

**भावार्थदीपिकाग्रन्थे सर्वमेतन्निरूपतिम्।**
**त्रयोदशतमाध्याये तत एवावधार्यताम्।।71।।**

**यतो हि पितृपादानाममृतार्थभरं वचः।**
**सर्वानुद्धारयेल्लोके तद्वक्तुं नास्ति मे बलम्।।72।।**

**कथं क्षीरसमुद्रस्तु कुम्भे नेयोऽल्पके वद।**
**अतोऽत्र बिन्दुमात्रस्य स्वास्वादेनामरो भव।।73।।**





अथ संयोगे वियोगोपलालनं यथा -

**अङ्कस्थितेऽपि दयिते कमपि प्रलापं।**
**हा मोहनेति मधुरं विदधात्यकस्मात्।।74।।**
**श्यामानुरागमदविह्वलमोहनाङ्गी**
**श्यामामणिर्जयति काऽपि निकुञ्जसीम्नि।।75।।**

इति राधासुधानिधौ। 'अनिर्वचनीयं प्रेमस्वरूपमिति' सूत्रेण तत्सर्व मभिहितप्रायम्। परब्रह्मस्वरूपभूतस्य रसस्य ब्रह्मानन्दस्यैव विशेष धर्मत्वाद् अनिर्वचनीयता। प्रेम्णः प्रकारविशेषाश्च अन्तःकरणधर्मस्य प्रकारा इति।

## प्रेमप्रकाराः

अथ प्रेमप्रकाराः। दृष्टिः परिचर्या हार्दं सौहार्दं प्रेम अभिधानम् उप्तं लिप्तं दलितं संतृप्तमित्यादिकाः प्रेमप्रकाराः सर्वेऽपि प्रेमरसायने निरूपिताः तत्रैव द्रष्टव्याः। अहमप्यन्यत्र निरुपयिष्यामि।

मम चात्र मधुराद्वैतसंप्रदायानुसारं किञ्चित् निरूपणीयमस्ति। ''गोप्यः कृष्णवियोगिन्य इति कस्तत्त्वतो वदेत्?'' इति पूर्वाचार्यैः कथितमपि। गोपीनां श्रीकृष्णवियोगः केन वक्तुं शक्यः? रासे वियोगाभासे जाते ''तत्रैवान्तरधीयत'' इति भागवते वर्णितात्। एवं ज्ञातव्यं यत् 'तत्रैव' इत्यस्य गोपिकानां हृदये इति भावः। अन्यत्र न क्वापि गतः।

**नित्यमेव निमग्नास्ताः कृष्णप्रेमसमाधिषु।**
**न कदापि वियुज्यन्ते गोप्यो विरहभीरवः।।**

**(प्रेमरसायने 1-102)**

हरिप्रेमनित्यनिमग्नाः प्रेमसमाधौ आत्मानुसन्धानपराः संयोगे विरहकातरा आसन्। अहङ्कारस्यानुत्थानमेव समाधिरक्षणम्। एवं नित्यप्रेमसमाधिनिष्ठानां शरीरं भगवान् भूतावेशन्यायेन प्रविशति। प्रारब्धव्यवहारं सर्वमपि कारयति। प्रारब्धञ्चाभिभावयति भक्तानाम्।

''नित्यसमाधियुक्तानां गोपीनां व्यवहारनिष्पत्तिर्भगवतैव परमकारुणिकेन निर्वाह्यते तासु भूतावेशन्यायेन प्रवेशोपगमात्' इति प्रेमरसायनकारेण विश्वनाथेन गदितम्।

दृष्टिसृष्टिवादेऽपि जीव एव बाह्यजगदपि स्वयं कल्पयित्वा अहंबुद्ध्यैव भोगान् भुङ्क्ते। सद्गुरूपदेशेन अहंवृत्तिनिवृत्तौ मोक्षः। अन्यथा अहंवृत्तिरेव वागृणम्। सद्गुरुकृपया वागृणनिवृत्तिः। तदा भक्तिफलप्राप्तिः।

''तदर्पिताखिलाचारता तद्विस्मरणे परमव्याकुलता'' इति सूत्रोक्तरीत्या सेवायां जातायां भोगः सहजो यो भवेत् स भवतु नाम।

**ज्ञाने मुक्तिस्तथा प्रेम्णि भक्तिश्च सहजोत्तमा।**
**चिदानन्दे च भक्तानां निरहङ्कृतिरीडिता।।76।।**

**व्युत्थाने च समाधौ च सहजा स्थितिरुत्तमा।**
**मधुराद्वैतरूपं स्यान्मधुराद्वैतवर्त्मनि।।77।।**

अत्रापि मृदु-मध्य-तीव्रदशा भवन्ति। साधनदशायां मृदुसंवेगो भवति। तीव्रसंवेगः सिद्धदशा। सद्गुरुसंयोगे वियोगे च महत्सुखमस्ति। एवं संयोगे स्वेच्छावियोगोपलालनं राधावल्लभमतात् अनुकूलत्वात् स्वीकृतम्।

अथ निष्ठा रतिः भावः प्रेम इति चतुर्धा मुख्यभक्तिमार्गः।

1. श्रवणादौ चित्तावेशाज्जायमानो लयाभावो **निष्ठा**।
2. ध्याने स्फुरिता इष्टमूर्तिर्वियोगेऽपि यदि न वियुक्ता सा **रतिः**।
3. भूतावेश इव यदा रुद्यात्, हसेत्, नृत्येत्, प्रलपेदपि भक्तस्तदा **भावः**। तथापि स्वानन्दे सहजव्यवहारो भवति।
4. अन्तःकरणानुरोधतः संयोगे वियोगस्फुरणं वियोगे च संयोगस्फुरणं तत् **प्रेम**लक्षणम्। समाधौ पूर्णः परमेश्वरः आत्मा। स एव व्युत्थानेऽपि आहार्यभेदेन सेव्यसेवकभावेन प्रेमाङ्गतयाऽनेयः।





एवं प्रेमदासेन लक्षणमभिहितम्। परन्तु अत्र ज्ञानं विना स्थितिर्नास्ति। राधावल्लभमते तावत् ज्ञानम् असंमतमेव। एतन्मतं भागवतानुसारीति नः प्रमाणम्।

**प्राज्वाल्य ज्ञानदीपं हि वाणी शान्ता चतुर्विधा।**
**आत्मनो बोधरूपस्य ज्ञानदीपोऽपि निष्फलः।।78।।**

एवं ज्ञानानुसन्धानमपि ज्ञानिनो बन्ध एवेति तातचरणाः।

**ज्ञानरूपः स्वयञ्चात्मा ज्ञानवृत्त्यैव बोधवान्।**
**सोऽहं ब्रह्मेति जानीते स बोधो बन्ध इष्यते।।79।।**

अतो निर्गुणसमाधेः कृते ज्ञानेन प्रयासकरणमनावश्यकम्। प्रमातिरेकेण तावदनायासेनैव समाधिसंभवात्। भक्तिबलेन स सगुणो भवति समाधिः। एतदर्थं हि ज्ञानी समधिः व्युत्थानञ्च भक्तेरेव भेदाविति निजसत्तया जानीयात्। व्युत्थाने आहार्यं द्वैतज्ञानं समाधौ सेव्यसेवकाद्वैतं - इति विद्यापतिवचनम्। यथा विद्यारण्यस्वामिभिः प्राणायामे अल्पः श्वासोच्छ्वासरूपः स्वीकृतः एवं भक्तिसमाधिमत्सु क्वचिदुद्गारविशेषः संमतः अस्माकम्। अयमेवाशयः वंगभाषया विद्यापतिना प्रकटितः। राधावल्लभमतस्य आचार्येण हितहरिवंशाचार्येणाऽपि दर्शितः स्वग्रन्थे। अस्मिन्नेव राधावल्लभमतेऽपि राधाकृष्णयोरभेदः। अतोऽस्मिन्-

**सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम्।**
**सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः।।80।।**

इत्ययं शाङ्कराद्वैतभक्तेरंश उपलभ्यते। प्रियदासमतेऽपि तथा। वृत्तान्तोऽयमास्तां तावत्।

**सजलौघा यथा गङ्गा समुद्रं प्रतिगामिनी।**
**अक्षया तद्वदेवेयं श्रुतिश्च ब्रह्मगामिनी।।81।।**

**(ज्ञानेश्वरी 13-672)**

इति तातोक्तिः। अपिच -

**अहं सद्‌गुरुसेवायां सर्वोपकरणं परम्।**
**एवं सेवां प्रकुर्वाणः सेवासौख्यं हि विन्दते।।**

इत्थं सगुणसमाधिमग्नस्य आहार्यभेदेन ज्ञानाङ्कुरः उदेति व्युत्थाने च सेवाप्रसाद एव सिध्यति। अत्र उपकरणादौ स्वदृष्टिरुपासना भवति। उपकरणादिकं स्वयं भवति चेद् भक्ति रेव। एतद् स्वानुभवसंवेद्यमेव। अथ गुणार्पणरूपा तृतीया -

गुणद्वेषराहित्यं गुणवैतृष्ण्यम्। गुणार्पणं तावत् श्रीकृष्ण एव। अत्रैव सुखावधेस्तृष्णा परां काष्ठामधिगता। तस्मिन् परमगुरौ हि शश्वदात्मार्पणेन सगुणसमाधिबोधे माधुर्यभक्तिरपि घटते।

अत्रेदं रहस्यम्। यावद् गुणद्वेषस्तावद् न गुणेभ्यो मुक्तिः। अपि च ततो न सत्त्ववृद्धिरपि तत्त्वतः।

**सत्त्ववृद्धेः कृते द्वेषः कर्तव्यो रजसस्तथा।**
**द्वेषस्तु रजसो धर्मः सत्त्ववृद्धिः कथं भवेत्।।82।।**

**तथैव रजसः प्रीत्या रागवृद्धिर्भवेद् ध्रुवम्।**
**इत्थं सत्त्वप्रतीतिर्न साधकस्य भवेत् क्वचित्।।83।।**

**सत्त्ववृद्धिं विना पुंसो विवेकख्यातिरेव न।**
**एवं ज्ञानञ्च योगश्च खपुष्पसमतामितौ।।84।।**

**उमाङ्गं पाण्डुरङ्गं वा नाश्रित्य हृदये सदा।**
**ज्ञानयोगौ कथं स्यातां दुःसाध्यौ भक्तिवर्जितैः।।85।।**

**अनुभूतिं विना शास्त्र-पाठमात्रेण मानवः।**
**श्रद्धां न प्राप्नुयात् तत्त्वज्ञानं न चाप्नुयात् परम्।।86।।**

**नरः करोति कर्माणि श्रद्धावान् श्रुतिकर्मसु।**
**स्वर्गममरतां प्रेप्सुः परं नाऽमरता हि सा।।87।।**

**आत्मज्ञानवलेनैव संप्राप्याऽमरता नृणाम्।**
**तच्च श्रवणमात्रेण ह्यधिकारवतः सदा।।88।।**





तदुक्तं तातपादै :-

**अधिकारी भवेत् कश्चित् सहस्रेषु तथाऽर्जुन।**
**वाक्यश्रवणमात्रेण तद्रूपो यो भवेत् सदा।। 89।।**

**(ज्ञानेश्वरी 18)**

अतः- स उत्तमाधिकारी स्यात् क्षणात् तन्मयतां गतः।

**मध्यमस्तूपपत्त्यादिसाहाय्येन तदाऽप्नुते।**
**आवृत्तिः श्रवणस्याप्यसकृत् फलवती मता।।90।।**

**गुणद्वेषाद् गुणप्रीत्याऽथवा न मनसो भरः।**
**गुणार्पणं ततः श्रेयः सेवासंपत्सुखप्रदम्।।91।।**

**ज्ञानोर्ध्वञ्च गुणद्वेषो गुणप्रीतिस्तथैव वा।**
**भवेच्चेत् ज्ञानसाफल्यं न स्यात् संपूर्णरूपतः।।92।।**

**इत्यतः श्रद्धया कार्यं परमेशे गुणार्पणम्।**
**साधकस्य च सिद्धस्य सेवाऽपि घटते ततः।।93।।**

अपि च -

**भोगानुभूतिकालेऽपि परेशार्पणभावना।**
**भोक्तृत्वेऽपि ह्याभोक्तृत्वं संपादयति सर्वथा।।94।।**

**तदित्थमात्मविज्ञाने भक्त्या तदनुभूतिमान्।**
**तद्‌गुणगुणिभावं स परित्यज्य च सर्वथा।।95।।**

**जीवन्मुक्तामवस्थाञ्च संप्राप्याऽपि परोन्मुखः।**
**ब्रह्मनन्दपरो नित्यं मुक्त इत्येव तिष्ठति।।96।।**

ननु भक्तस्य यदि सुखदुःखान्यतरभोगाभावस्तर्हि भगवति सः किमर्पयेत् इति चेत् न।



शुद्धवृत्त्या केवलं सात्विकं प्रारब्धं भोक्तव्यम्। प्रारब्धसंपाद्यः बाह्यभोगोऽपि द्विधा सत्त्वावष्टब्धरजोगुणात् रागजन्यभोगः, तमो-

ऽवष्टब्धरजोगुणेन द्वेष्यभोग इति। तत्र परमेश्वरे रागजन्यभोग-मात्रसमर्पणमेव सेवा। वैषियिकरागस्य भगवत्समर्पणतः अनध्यस्तविवर्तरूपे सगुणब्रह्मणि परभक्तिरसप्रवाहोऽ प्रतिहतरूपेण भवति। सा परानुरक्तिरीश्वरे इति शाण्डिल्यमहर्षिणा गदितं लक्षणमनुसृत्य सेवा करणीया। शरीरं मिथ्येति जानानस्य शरीराश्रयेण द्वेष्यवृत्तावपि कुतो द्वेषः? देहाहन्ताया अपेक्षया भूतदया श्रेयसी चेदपि भगवति चित्तसमर्पणमेव भक्तिलक्षणमिति बोद्धव्यम्। सेवाऽपि धर्मानुसारं कृता मध्यमस्तरीया। भावानुसारं कृता तु उत्तमा।

**अर्धक्षणवियोगोऽपि प्रियदास्यसुखं विना।**
**न भवेदिति भावो यो माधुर्यभक्तिलक्षणम्।।97।।**

अस्मिन् सेवायोगे दास्यं वात्सल्यमात्मभावना चेति त्रितयमेकरूपं भवति।

**अत्र दास्यं च वात्सल्यं तथैवचात्मभावना।**
**इत्येतत् त्रितयं चैकं माधुर्यभक्तिलक्षणम्।।98।।**

भक्तः स्वशरीरेण दास्यं करोति यतः सेवायाः कृते बाह्यपदार्थानां ग्रहणमपि अपेक्ष्यते तत् सर्वं सः भगवते समर्पयति। अपि च सेवायाः सहायरूपेण चराचरपदार्थान् सख्यभावेन समीक्षते।

**एवं सेवां प्रकुर्वाणो दिवानिशगतिं खलु।**
**न वेत्ति ब्रह्मणि ध्रुवनिष्ठावान् प्रेमसंरतः।।99।।**

**सर्वेष्वपि पदार्थेषु सेवामग्नस्य सर्वदा।**
**सा स्याद् व्यापकसत्तैव सर्वत्र ब्रह्मरूपिणी।।100।।**

**अतः स वासनाः सर्वाः समर्पयेच्च हार्दिकीः।**
**आनन्दावाप्तये भक्तावानन्दब्रह्मणि प्रियः।।101।।**

**यावत्यस्तीव्रसंयोगात् सञ्जाता वृत्तयो हृदि।**
**यतः सर्वपदार्थानां निर्मितिः शास्त्रवर्णिता।।102।।**





**ताभिः सर्वात्मना भक्तः सेवामात्रपरो भवेत्।**
**ताः स्वबलेन संपाद्य सेवां संपादयेत् सदा।।103।।**

अतः संयोगे वियोगोपलालने रतो भक्तो हि भाग्यवान्। अप्रमादः सेवालक्षणम् एतत् सिद्धार्थैः निरूपतिम्। आस्तां तावदयं प्रसङ्गः-

**प्रेमैकमूर्तयो नद्यः प्रयाताः सागरं प्रति।**
**तदोघवर्णनं कर्तुं वाणी किं स्यादलं क्वचित्।।104।।**

**इति मधुराद्वैतसिद्धौ चतुर्थं प्रकरणम्**

★★★★

**सेवैव फलनिदर्शनम्**

सेवा पूर्वं निरूपिता। अथ फलानुसन्धानं यथाशक्ति निरूप्यते। अद्वैते भक्तिरुपपद्यते इति नो मतम्।

ननु अद्वैते द्वितीयस्यैवाभावात् कथं द्वैतनिर्भरा भक्तिरुपपद्येत? इतिचेत् न।

**यद्यपि संगता गङ्गा सागरेणान्तरा।**
**तथापि सर्वदाऽखण्डा संगच्छतीति वै वचः।।105।।**

**तथैव स्वयमीशः सन् ईश्वरं भजते प्रियः।**
**इत्येतत् तातपादानां सुस्पष्टं भक्तिलक्षणम्।।106।।**

तथाहि -

**अद्वैते न क्रिया शक्या तथाऽपि भक्तिसंभवः।**
**एतन्न शब्दगम्यं वोऽनुभूतिमात्रसिद्धितः।।107।।**

इति ज्ञानेश्वर्याम् (18-1151)

सेयमद्वैमभक्तिः किंरूपेत्युक्ते उच्यते -

**व्यतिरेकावसने या जगदन्वयरूपिणी।**
**प्रीतिवृत्तिं समाश्रित्य माधुर्यभक्तिरूर्जिता।।108।।**

अत एव तातपादैरुक्तम् अमृतानुभवे -

**विना हानिं स्वरूपैक्ये द्वैतसौन्दर्यमस्ति चेत्।**
**स्ववीचिमुकुलानां किं लाभं न प्राप्नुयाज्जलम्।।109।।**

**(1-59)**

**खनित्वा पर्वतं लोके कुर्वते देव-देवताः।**
**मन्दिरं परिवारञ्च सर्वञ्चापि शिलामयम्।।110।। (9-43)**







**तद्वदेव कथं भक्तौ व्यवहारो न संमतः।**
**इत्यस्माद्धेतुतो भक्तौ स्वीकार्योऽद्वैतसंभवः।।111।।**

**अहं ब्रह्मास्मि-बोधोत्थं वाचाऋणमशेषतः।**
**मोचयितुमहं पादौ गुरोराश्रित्य संस्थितः।।112।।**

**सद्गुरोः कृपयैवाहं वाचाऋणस्य भारत।**
**आत्मानं मोचयित्वाऽथ संस्थितः शान्तमानसः।।113।।**

**(3-32)** इति।।

ज्ञानेश्वर्यामपि - (11-608)

**भोगमोक्षस्थलेऽस्माकं त्वन्मूर्तिरेक आश्रयः।**
**भोगाख्ये परमानन्दे मोक्षे विदेहरूपिणि।।114।।**

**विश्वरूपमतस्त्यक्त्वा प्रियां साकारतां भज।**
**श्रीकृष्णात्मकरूपेऽस्मिन् आनन्दःपरमो हि नः।।115।।**

इति वर्णितम्।

अस्यायमाशयः। जीवन्मुक्तिरूपे प्रारब्धभोगे सगुणभक्तिं विना न दृढदुःखनिवृत्तिः। कैवल्यरूपेऽपि अपवर्गे निजस्वरूपमात्रस्थितौ निजभक्तस्य अनुरागमात्रमवशिष्यते।

**अद्वैतभक्तौ द्वैतनिरासः।**

मुक्तावस्थायामपि द्वैतमिच्छान्ति केचन। विशिष्टद्वैतिनोऽपि तथा। परन्तु श्रुतियुक्तिसंमतं न तत्।

**नैकाधिकरणं शक्यमद्वैतद्वैतयोर्द्वयोः।**
**शतकल्पविचारेऽपि प्रमाणसंभवो न हि।।119।।**

**विरुद्धयोर्द्वयोर्नैव शक्यमेकत्र संस्थितिः।**
**परमस्मिन् मते मुक्तौ परेशमात्रसंस्थितिः।।120।।**

महाभारतेऽपि मोक्षधर्मे भीष्माचार्येण मुक्तानामुपासना कथिता। ब्रह्मसूत्रेषु च जीवोपासना महाभ्रम इति प्रतिपादितम्। तत्र वाक्यविरोध-परिहारपुरःसरं निरवग्रहैश्वर्यरूपो मोक्षः साधनीय इत्येव नः सिद्धान्तः। अन्यथासिद्धौ यत्नो वृथा।

ननु सगुणोपासकानां सगुणसायुज्यप्राप्तौ संकल्पमात्रेण तेषां भोगार्थानां सृष्टिर्या कथिता साऽपि मुक्तिदृष्ट्या अवग्रह एवेति खलु जगद्व्यापारवर्जनाधिकरणे प्रतिपादितमितिचेत्। न।

ये तावत् सगुणस्य सायुज्यमाप्नुवन्ति न तेषां निवृत्तमन्तःकरणम् भ्रमरकीटन्यायेऽपि कीटध्यानेन कीटो जातो भ्रमरः तदेकजातीय तामवाप्तवान्। तथापि व्यक्तिभेदस्तदवस्थ एव भवति।

**पृथङ् न ज्ञायते स्पष्टं शर्करा जलमिश्रिता।**
**तथाऽपि पुरुमाधुर्यं जले तस्या भवेत् खलु।।121।।**

**तथैव सगुणाऽभेदे जातेऽपि भेद अन्ततः।**
**न निवर्तेत सायुज्ये स्वान्तःकरणवृत्तितः।।122।।**

**न हि ज्ञानादृतेऽविद्यानिवृत्तिरिह भवेदिति।।**
**ध्यानेन नास्ति यस्मात् तत् कर्तृनिघ्नं भवेदिति।।123।।**

**अतो न सगुणोपास्तिःसाक्षात्कारो भवेदिह।**
**अन्तःकरणभेदेन शक्तिभेदस्य संभवात्।।124।।**

ननु सत्यसंकल्पादिगुणैःखलु ब्रह्म सगुणम्। तर्हि सगुणसायुज्ये साक्षात्कारे च कुतो भेदः? अपि च निर्गुणसाक्षात्कारफलं सगुणब्रह्मणि कथं शक्यम्? इति चेत् न।

समसत्ताकपदार्थानामेव साधकबाधकता न तु विषमसत्ताकानाम्। सामान्यचैतन्यस्य सत्यसंकल्पादिगुणानाञ्च विषमसंकल्पस्वीकारकारणेन न विरोधः। सामान्यचेतने सत्यसंकल्पादिगुणानां विवर्तत्वमेव।

यद्यपि जक्षणादिव्यापारोऽपि चित्सामान्ये भिन्नसत्ताकत्वात्





अविरोधितां भजते तथापि तत्तद्व्यापारोपाधिर्जीवः स्वयं तत्तत् स्वस्मिन् आरोपयति तदभिमानी च भवति।

वस्तुतः आकाशगतेन रजःकणेन नाकाशस्य रागः शक्यस्तथा जक्षणादिव्यापाराणाम् आधारभूतस्य सामान्यचैतन्यस्य न तेषां लेपः। भोक्तुरभावे सुखदुःखभोगो न शक्यः। जीवस्तु स्वयमविद्यावशाद् भोक्तृत्वं स्वस्मिन् आरोपयति।

जीवः जक्षणादिभोगानाम् आश्रयः सन्नपि सामान्यचैतन्ये अहन्तां विना तान् भुञ्जानः पूर्णतोऽलिप्तो भवति। जीवस्य यावदवधि आरूढाहन्ता तावदेव जक्षणाद्यर्थभोगः। विदेहमुक्तौ अविद्याया निवृत्तौ नारूढाहन्ता-इत्यतो न जक्षणादिव्यापाराः। किन्तु आवरणापगमाद् ऐश्वर्य-सत्यसंकल्पादि सर्वं सिद्धिरूपेण तिष्ठति। अविद्यारूप-आवरणसत्त्वे जक्षणादिव्यापारसत्त्वम्। ज्ञानेन तु तत्तद्व्यापाराणां निवृत्तिः अविद्यानिवृत्तिद्वारा।

अविद्ययाऽनावृते परमेश्वरे नित्यमैश्वर्यम्। सर्ववेदान्तप्रकारेषु ईश्वरस्याऽविद्याऽनावृतत्वमेव। तस्यापि अविद्याऽवृतत्वस्वीकारे वेदानामप्रामाण्यम्। ततश्च सर्वमोक्षसाधनलोपप्रसङ्गः।

जीवे नित्यसुखार्थं प्रवृत्तिः सदा प्रतीयते। अत ईश्वरे अविद्या-आवरणस्वीकारोऽनुचितः। केवलनिरोधमात्रेण न प्रवृत्तेः निवृत्तिः। तस्मात् ईश्वरे सत्यसंकल्पादिगुणाः अनावृतिसिद्धाः एव।

ईश्वरयैश्वर्यमपि उपाधिवशात् जीवकल्पितम् परेषामनुग्रहार्थम्। तस्य सिद्धेन सह अविरोधस्वीकारे सगुणसाक्षात्कारसंभवः। तत्त्वबोधो हि साक्षात्कारः। अतो न ज्ञानं विना जीवस्य सगुणसाक्षात्कारोऽपि शुद्धरूपेण भवेत्। ध्यानरूपः सगुणसाक्षात्कारस्तु कर्तृभावनागोचरः। अतो न नित्यसिद्धः। सत्यसंकल्पादिगुणाः यावत्संसारं पूर्णा नित्याश्च। सगुणे सायुज्यं प्राप्तोऽपि प्रत्यावर्तेत। ज्ञानी तु न पुनरावर्तते। अपुनरावृत्तिरेव मोक्षः।

**शुद्धं स्वर्णमभिज्ञाय भूषणे विविधे यथा।**
**जायते परमानन्दो भूषाभोगेऽथ लौकिके।।125।।**

**तथैव ज्ञानमाहात्म्यादभिज्ञायेह निर्गुणम्।**
**साक्षात्कृतौ महानन्दः सगुणस्यापि तत्त्वतः।।126।।**

ननु एकस्य मुक्तौ सगुणेन सह सायुज्ये च शुद्धचैतन्यमेव खलु प्राप्तव्यम्। ईश्वरस्य इतरजीवापेक्षितस्वरूपात् एकजीववादे एकस्य मुक्तौ शुद्धचैतन्यमेव प्राप्यत इति हि अप्पय्यदीक्षितानां मतम्। इति चेत् न।

तत्तु रत्नप्रभाकारमतम्। एकाज्ञानपक्षे तदंशनाशेन मुक्तः सगुणेन सायुज्यमाप्नोति इति तत्। इतरजीवगतया अविद्यया रचितम् ईश्वरस्य ऐश्वर्यमिति दीक्षितसंमतम्। तत्र विचार्यते।

ऐश्वर्यं तमोऽविद्यारचितमुत सत्त्वाविद्यारचितम्? तमोऽविद्या तावन्नालम् ईश्वरस्य ऐश्वर्यकल्पने। सत्त्वाविद्या च अन्तःकरणं विना न संमता। तस्य च अन्तःकरणस्य क आधारः? सामान्यचैतन्यम् उत ईश्वरः? उभयथाऽपि अन्तःकरणस्य बहुत्वेन जीवाभासा भवन्ति। एकजीवा-भासस्य मुक्तावपि तदितरजीवाभासस्य सत्त्वाविद्याकृतानां सत्यसंकल्पा-दिगुणानां न हानिः।

एकजीववादे मुक्तस्य सगुणेशभावापत्तिरथवा जीवप्रतिबिम्ब अपेक्षित बिम्बेश्वरैकीभावः।

ज्ञानेन जीवन्मुक्तोऽपि स्वप्ने व्याघ्राद् भीतो भवति स्वस्य सहजं सर्वज्ञत्वं विस्मृत्य। ज्ञानेन आवरणनाशेऽणि प्रारब्धवशात् प्रतिबिम्बभानं भवति। अतः स्वप्नकर्ता सर्वज्ञः सन्नपि स्वप्नसृष्टेः सर्वज्ञो न भवति।

अपि च हिरण्यगर्भ इव सर्वाभिमानी नास्ति परमेश्वरः। जागर्यायां स्वप्नेऽपि मुक्तानां स्थितिमीक्षते साक्षिरूपेण। अतः पुरुषोत्तमः। हिरण्यगर्भःसर्वाभिमानी सन्नपि कारणसृष्टेः अज्ञानी। परमात्मा तु अकुण्ठितज्ञानी इति इयान् भेदः। अपिच एकजीववादेऽयं भेदो-







व्यावहारिक एव। योगवासिष्ठस्य नवमाध्याये निर्वाणप्रकरणे वर्णितं यत् नित्यमुक्ता जीवा ब्रह्मा हरिः इति भवन्ति। एवम् ईश्वरः, हरिहरौ, नित्यामुक्ता इति एकजीववाददृष्ट्या स्वीकारेऽपि न विरोधः।

अथ ये सत्यसंकल्पादिगुणास्ते प्रतिबिम्बापेक्षिक-बिम्बत्वा रोपलक्षणाः अतस्तदवच्छिन्नः बिम्बभूतः परमेश्वर एव मुक्तानां प्राप्यः। तत्पदवाच्यार्थः सः अपरोक्षतया हृदये वसति इति बहुधा प्रपञ्चितमेव। स एव दहराकाशो मुक्तजीवप्राप्य इति समन्वयाध्याये सूत्रभाष्यकारैरपि प्रतिपादितम्। अविरोधाध्यायेऽपि 'अंशत्वाधिकरणे' तथा सूचितम्। साधनाध्यायेऽपि सन्ध्यविचारे विशेषतो विवेचितम्। सन्ध्याधिकरणस्य अभिप्रायावलोकनेन स्पष्टा मिदं भवति यत् जीवस्यापि स्वप्नसृष्टौ सत्यसंकल्पादिसत्त्वेऽपि जगत्सृष्टौ तावत् अविद्यावशात् सत्यसंकल्पादिकं तिरोहितमिति। विद्यया च अविद्यानिवृत्तौ जीवेऽपि आविर्भवतीति मुक्तस्य सगुणेश्वरभावापत्तिरुपपन्ना। एवमेव फलाध्यायस्य चतुर्थपादे तृतीयाधिकरणेऽपि मुक्तप्राप्यविचारः सूत्रभाष्यकारैः प्रवर्तितः। प्रथमं तावत् मुक्तानां सत्यसंकल्पादिप्राप्तिः जैमिनीयमतेन दर्शिता। ततः मुक्तानां शुद्ध-ब्रह्मप्राप्तिः औडुलौमिमतेन दर्शिता। अतः सत्यसंकल्पादि श्रुतिः किं निरालम्बेति प्रश्ने महर्षिणा व्यासेन सिद्धान्तितं यत् न काऽपि श्रुतिर्निरालम्बा। परमार्थतोऽवलोकिते तत् शुद्धमेव। व्यावहारिकदृष्ट्या तु मुक्तः ईश्वरो भवति। ईश्वरे सत्यसंकल्पादिकं सर्वमपि बद्धजीवेन आरोपितमिति एकमुक्तावपि तदितरबद्धजीवापेक्षया ईश्वरो भवत्येव। स च यावत्संसारं सगुणः। मुक्तोऽपि मुक्तौ तदभिन्नो भवतीत्याशयः बादरायणमहर्षिणा प्रदर्शितः ''एवमपि उपन्यासात् पूर्वभावाद् अविरोधं बादरायण'' इति सूत्रेण।

अथ एकप्रतिबिम्बस्य प्रतिबिम्बान्तरापत्तिरिव मुक्तस्यापि बद्धजीवान्तरसंप्राप्तिरिति शक्यत इति प्रतिबिम्बस्य बिम्बेन सह अभेदप्राप्तौ न विरोधः। तथैव मुक्तस्य ईश्वराभेद इति परिमले अप्पय्यदीक्षितवचनम् शुद्धम्।

अयमप्याशयः प्राचीन एव। यथा पञ्चपादिकाविवरणे प्रकाशात्मयतिना बिम्बप्रतिबिम्बभावः पूर्णतया दर्शितः। तन्मते बिम्बस्य यथार्थतया प्रतिबिम्बमपि यथार्थमेव। उपाधिस्थले तत् प्रतिबिम्बं नोत्पद्यते तथा दर्पणे मुखाभासो नोत्पद्यतेऽपि तु चित्तमेव नेत्रद्वारा वृत्तिरूपेण बहिर्गतमिति। तदेव दर्पणेऽभिहतं सत् प्रतिनिवृत्य मुखप्रान्तं विषयीकरोति। तदेव मुखं तदा बिम्बं प्रतिबिम्बञ्च भवति। तत्र बिम्बत्वप्रतिबिम्बत्वे उभे अपि भ्रमः।

तथा जीव ईश्वर एव। जीवत्वम् ईश्वरत्वञ्चेति भ्रमः। जीवस्य मुक्तावीशभावः प्राप्त एव।

ननु 'जीवत्वम्' इति जातिःउत जीवभावः? जातिपक्षे जातिरिरिति अनेकव्यक्तिस्थले भवति। उत्पत्तिं विना अनेकव्यक्तिषु जातिर्न उपलभ्यते जातिं विना अनेकव्यक्तयो न गृह्यन्त इत्यन्योन्याश्रयः। जीवभावपक्षे च स्वरूपोत्पत्त्यापत्तिः - इति चेत् न।

उभयविधविकल्पकोटिरपि च्छलरूपा। अपि च वेदान्तसंप्रदाये जीवत्वशब्दगतस्य त्वप्रत्ययस्य ''बौद्धार्थे अधिकरणभिन्नता'' इत्येवार्थो मम संमतः।

प्रतिबिम्बं तेजोरूपम्। तत्र प्रतिबिम्बत्वमिति बौद्धो भेदः। अन्यथा तेजस एव प्रतिबिम्बत्वापत्तिः प्रतिबिम्बत्वं तेजसि न भवति बुद्धौ भवति।

शब्दे 'त्व' प्रत्ययस्य वाचारंभणतः तदनुगुणो भेदो भवति। अन्यथा 'ब्रह्मत्वम्' इति शब्दमात्रेऽपि प्रकृतिप्रत्ययौ क्व उपपन्नौ भवेताम्? प्रकृतिर्वाच्यार्थः प्रत्ययश्च अनर्थः निष्प्रयोजन इति कथ्यते चेत् तत् सर्वं महाभाष्यविरुद्धमेव। अतः प्रकृत्यर्थः परमार्थता, प्रत्ययार्थश्च यावदर्थता इति व्यवस्था सूपपन्ना स्यात्।

अथ शुद्धस्य ज्ञानेन शबलस्य प्राप्तिः कथमिति तु स्वयमनुभवसिद्धम् प्रतिबिम्बस्य यथा बिम्बे एव प्राप्तिस्तथा शुद्धचैतन्यज्ञानानन्तरं जीवस्य प्रतिबिम्बभूतस्य स्वबिम्बभूते सगुणे एव प्राप्तिर्न तु शुद्धे।







बिम्बस्यापेक्षया शुद्धमेव प्राप्यत्वेन स्वीकर्तुमशक्यं यतः तदा जीवः शुद्धस्यांश इत्यापद्येत तन्न युक्तं ''अंशो नानाव्यपदेशात्'' इति शारीरकसूत्रभाष्याभ्यां तस्य निराकृतत्वात्।

सुवर्णस्यांशस्य उदाहरणं यत् पूर्वं दर्शितं तद् बालानां बोधाय इति अनध्यस्तविर्वतरूपं यत् कनकस्य दृष्टान्तद्वारा दर्शितं तच्च प्रौढानां बोधायेति च बोद्धव्यम्।

लोकवासनापरित्यागपूर्वकं जीवन्मुक्तौ प्रेममात्रभक्तिराश्रणीया। ततः सर्वाऽपि वृत्तिः श्रीकृष्णचरणयोः समर्पणीया। प्रेमकृते सालोक्य-सामीप्य-सारूप्य-सायुज्यरूपवासना अपि हातव्याः। प्रेमोन्मादबलाद् या या लीला विलसति सा सर्वाऽनध्यस्तरूपेण कैवल्ये भवति चेदपि का हानिः? जीवन्मुक्तावपि यदि भगवान् स्वयं मुरलिवादनपूर्वकं समाह्वयति चेत् सा वृत्तिर्न निरोद्धव्या। प्रेमवृत्तिं विना सखीप्रेषणं व्यर्थं किमीश्वरो विश्वकल्याणकृत् करुणानिधानं प्रेम न जानीयात्?

लोकाकारेण लीलाविलासेऽपि कैवल्यमेव। सेवा चानध्यस्तविवर्त रूपेण घटते। अयमपि जीवन्मुक्तिविशेषः सेवाफलमिति भावः। यद्यपि परप्रारब्धतोऽनुत्पन्नं भगवच्छरीरं तथापि परमायाऽपेक्षमिति मुक्तानामीश्वरेण सह मिलने न कोऽपि विरोधः।

तथाहि गदितं करुणासागरैः तातचरणैः -

**बिम्बं हि प्रतिबिम्बस्य द्योतकं तत्प्रकाशनात्।**
**प्रतिबिम्बञ्च बिम्बस्य भवत्येवानुमापकम्।।127।।**

**(अनुभवामृतम् 1-26)**

एवं द्वैतमिषेण शुद्धमद्वैतमेव सर्वदा विलसति। एवं जीवेश्वरनिर्णये बद्धमुक्तनिर्णये वा उपाधिनाशे स्वयं जीव एवेश्वर इति सिध्यति।

**घटाकारविनाशे आकाशे तल्लयो भवेत्।**
**घटाकारस्य नान्यत्र गमनं मेलनं भवेत्।।128।।**

**देहाहङ्कारनाशेऽपि समूले तद्वदेव च।**
**परमात्मैव जीवस्य स्वरूपं भाति पूर्णतः।।129।।**
**(ज्ञानेश्वरी 6-83, 84)**

इति च तातपादोक्तिः प्रमाणम्।

अतः सत्यसंकल्पादिकं समस्तं विदेहमुक्तेरविरुद्धम्। प्रतिबिम्बस्य मिथ्यात्वं दर्शितम् अप्पयदीक्षितैः लेशसंग्रहे। प्रतिबिम्बस्य मिथ्यात्वस्वीकारो नाम आभासवादस्य स्वीकार एव। आभासवादे च उपाधिनाशे आभासनाशः।

दीक्षितेन्द्रमते प्रतिबिम्बस्य मिथ्यात्वे तथा बिम्बेन सहैक्यं कथं भवेत्? अतः प्रतिबिम्बस्य बिम्बस्वरूपस्वीकारः एव श्रेयान्।

आस्तामियं तावत् खण्डनमण्डनप्रक्रिया। दीक्षितेन्द्राश्च अद्वैतवेदान्तिनः। अतस्तेषामपि वचनं युक्तियुक्तमेव।

अस्माकं मतमिदम्। धात्वन्तरमिश्रितात् सुवर्णात् धात्वन्तरं पृथक्कृत्य स्वर्णमात्रमेव अवशेष्यते तथा उपाधिसंसर्गाद् अंशत्वं प्राप्तो जीवः उपाधिनाशे जीवत्वप्रयोजकापगमे ब्रह्ममात्रमवशिष्यत एव। तथाऽपि अंशस्य दृष्ट्या अंशिना सहैव मेलनमंशस्य युक्तम्।

अंशी च सत्यकामादिगुणविलसितः परमेश्वरः। अतो मुक्तोऽपि मुक्तौ स एव भवति। ज्ञानोत्तरं भक्त्या जीवन्मुक्तिः संपाद्यते। विदेहमुक्तिस्तु वागगोचरा।

यद्यपि निदिध्यासनप्रकाशे विदेहमुक्तावपि भक्तिरस्माभिः कथिता तत् वादिजयार्थमेव। ते वादिनः विदेहकैवल्यमपि वाग्विषयं मन्वत इति तेषां जयर्थमेवम् अस्माभिः कथितम्। यदि विदेहकैवल्यं वाग्विषयस्तर्हि तत्र भक्तिरपि किं न भवेदिति नः आशयः।

किंवा बद्धजीवारोपितेन सत्यसंकल्पादिना आरोपवशात् लीला शक्या। एकजीववादे च बन्धस्यैव अत्यन्तम् असत्यतया न सुतारां मुक्तेरावश्यकता। सर्वं ब्रह्मेति साक्षात्कारोत्तरं जीवस्याध्यासरूपे विज्ञाते आत्मा सदैव मुक्त इत्येव प्रत्ययो भवति।







**ब्रह्मत्वमथ जीवत्वं नाममात्रेण भिन्नता।**
**द्वयस्याभावतो मुक्तेर्वार्ताऽपि संभवेत् कथम्।।130।।**

ब्रह्मस्फुरणतो जीवाध्यासनिवृत्तौ सत्यसंकल्पादिगुणमयमेव विश्वं प्रतीयते।

तातचरणैरुक्तम् अमृतानुभवस्य सप्तमाध्याये-

**ज्ञानस्य व्यवहारे हि सर्वं ज्ञानमयं यतः।**
**अज्ञानव्यवहारोयं कथमानीयतां पुनः।।131।। (100)**

**एतदज्ञानवाच्यं चेत् सर्वं द्रष्ट्रादिभासनम्।**
**ज्ञानस्य किं स्वरूपं स्यात् सर्वार्थप्रविभासने।।132।।**
**(101)**

चांगदेवपञ्चषष्टिग्रन्थेऽपि -

**स्वर्णत्वस्य विना लोपं स्वर्णे तद्भूषणादिकम्।**
**कर्तुं शक्यं यथा तद्वद् ब्रह्मणो भासते जगत्।।133।।**

**अविहायैव रूपं स्वमुदकं वीचिशोभितम्।**
**तथैव स्वेन रूपेण ब्रह्मैव जगदात्मकम्।।134।।**

इति तातचरणानाममृतं वचः।

एवं दृष्टिसृष्टिवादादिकल्पनाः उपदेशार्थमेव। अन्यथा तावद् ब्रह्मणि सत्यसंकल्पादिकमविरुद्धमेव।

अत एव ब्रह्माद्वैतेऽपि जीवापेक्षिक-भेदारोपे देवभक्तादिका सर्वाऽपि लीला अविरुद्धा। वस्तुतस्तु परं ब्रह्म तावत् सर्वथा वागविषय एव। तथापि वाग्विषयत्वेनोपक्रमस्तु उपलक्षणमात्रम्।

कादाचिकत्वे सति व्यावर्तकत्वं हि उपलक्षणस्य लक्षणम्। काकवद् देवदत्तस्य गृहमिति। गृहस्योपरि काकमुपविष्टमवलोक्य ततस्तद् गृहं पृथग् विज्ञाय नरस्तत्र प्राप्नोति। मध्ये काके उड्डीय गतेऽपि स तद् गृहमेव प्राप्नोति।

तथा अविकारिणि ज्ञाने ब्रह्म यदा ज्ञातं ततोऽज्ञाननिवृत्तौ ज्ञातत्वमपि न शिष्यति। अतो ब्रह्मण्येव विदेहमुक्तिः। एतस्माद्धेतोरेव ज्ञातत्वोपलक्षितं ब्रह्मेति वेदान्तिनां वचः।

आरोपेण उपलक्षिते न भेद इति एकजीवापेक्षिकारोपावच्छेदेन ईश्वरे लीलया भेदावभासेऽपि अद्वैतब्रह्मणि न कोऽपि विरोधः। अतः प्रतिभासावच्छिन्नाऽपि सा पारमार्थिकी सत्ता पूर्णा। एतावता नास्माकं विशिष्टाद्वैतपक्षग्रहणम्।

अनध्यस्तविवर्तभेदविषये त्रिपादमहानारायणोपनिषदादि-श्रुतिजननी परब्रह्मणः साकारबोधे प्रमाणम्।

तथाहि -

**साकारोऽपि पुनर्द्विविधः नित्यसाकारो मुक्तसाकारश्चेति।**
**नित्यसाकारस्तु आद्यन्तशून्यः शाश्वतः।**
**उपासनया ये मुक्तिं गताः तेषां साकारो मुक्तसाकारः।**
**तस्याखण्डज्ञानेनाविर्भावो भवति। सोऽपि शाश्वतः।**
**मुक्तसाकारस्त्वैच्छिक इत्यन्ये वदन्ति।**

इति त्रिपादमहानारायणोपनिषद्।

ज्ञानेन न निर्वतत इति नित्यसाकारमपि ब्रह्म अनध्यस्तविवर्तम्। मुक्ता अपि यत ईश्वरे एकीभवन्ति तदेतदनध्यस्तविवर्तं साकारमेव। अतो देवभक्तादि-लीला वेदान्तेऽ विरुद्धा।

अस्याःश्रुतेरुपष्टम्भनमपि स्कन्दपुराणवचने समुपलभ्यते -

**शृणुत दत्तचित्तौ मे रहस्यं ब्रजभूमिजम्।**
**वृजिनं व्याप्तिरित्युक्त्या व्यापनाद् व्रज उच्यते।।**

**गुणातीतं परं ब्रह्म व्यापकं व्रज उच्यते।**
**सदानन्दपरंज्योतिर्मुक्तानां पदमव्ययम्।।**
**(वैष्णवखण्डे भा.मा.अ. 1) इति।**





यद्यपि शुद्धब्रह्मैवात्र मुक्तप्राप्यत्वेन वर्णितं तथापि बिम्बभूतस्य परमेश्वरस्य प्राप्तिः सत्यस्वरूपतोऽभिन्नेति कारेणन शुद्धस्यैव प्राप्तिः - इति अस्माभिरङ्गीकृतं विवरणकारमतमनेन वाक्येनापि स्पष्टी भवति। यथा -

**तस्मिन् नन्दात्मजः कृष्णः सदानन्दाङ्गविग्रहः।**
**आत्मारामश्चाप्तकामः प्रेमाक्तैरनुभूयते।।**
**(स्कन्दपुराणं माहात्म्य-1)**

मुक्ता अपि ईश्वरं प्राप्नुवन्तीति ईश्वरलीलाऽपि यथार्थैवेति निगूढः सिद्धान्तः श्लोकेनानेन व्यज्यते। नन्दात्मजः स शार्ङ्गपाणिरेव अनध्यस्तविवर्त इति द्योतयितुं सदानन्दविग्रह इति कथितम्। स्वस्यैव नानारूपैः किंवाऽभेदरूपे सत्यसंकल्पतः सदा रमते इति स आत्माराम इति श्लोकेऽभिहितम्।

अस्मिन् न कदाऽपि अज्ञानसंभव इत्यतः अज्ञाननिवृत्तिरपि अनुपयुक्ता। मायावृत्त्यैव अहंब्रह्मज्ञानम्।

अज्ञानाभावे अज्ञाननिवृत्तिरनुपपन्नेति कुतोऽज्ञानप्रशंसा। अतः ईश्वरस्य अहंब्रह्मवृत्तिरेव लोकानुग्रहार्थं वेदरूपा जाता।

''प्रेमाक्तैरनुभूयते'' इत्यस्यायमर्थः - शुद्धब्रह्मणः भक्तानामेव श्रीकृष्णरूपेण प्रतीतिः। ज्ञानिनामपि निर्गुणप्राप्तावपि न तेषां रसाभेदस्य प्रतीतिः।

ज्ञानिनो रसाभावे ब्रह्माभावः भक्तस्य तु रसप्रतीतिरपीति विशेषः। एवं भक्तस्य सरसविदेहमुक्तिः। अग्निपुराणेऽपि रससिद्धान्ते एवमुक्तम्।

इत्थं ज्ञानिनो भक्तस्य च मुक्तौ सगुणेशभावापात्तौ विशेषाभावेऽपि भक्तान् प्रति रासलीलाऽविर्भावे विशेष इति नो मतम्। विदेहमुक्तौ तथा विशेषस्य आवश्यकताया अभावेऽपि तत्रापि अनध्यस्तविवर्तो भवत्येवेति भावः। श्रुतित एव विदेहकैवल्यसिद्धौ तत एव अनध्यस्त-विवर्तसिद्धिः।

नित्यसाकारः अनध्यस्तविवर्तः महानारायणश्रुतितः सिध्यति। तथैव भक्तिबलतो मुक्तानां शाश्वतसाकारप्राप्तिः सात्वतश्रुतौ कथिता।

अथ श्रुतिषु उपासनाशब्दस्य भक्तिपरत्वेन अर्थं कल्पयित्वाऽविवेकी तयोः समानार्थकतां वदति। परन्तु ''उपासनया ये मुक्तिं गता'' इति श्रुतिजनन्या वचनस्य, ''प्रेमाक्तैरनुभूयत'' इति पुराणगत-उपबृंहणवाक्यस्य च परिशीलनेनावगम्यते यत् क्रियाप्रधानमुपासनं, प्रेमपर्याया भक्तिरिति द्वयोः सुतरां वैलक्ष्यण्यमिति।

प्रेम्णि क्रियाशैथिल्यं महद्भिरनुभूयत एव। प्रेमाक्तैरनुभूयत एवेति कृष्णानुभवस्य समुपबृंहणं श्रुत्यर्थः। विद्यावृत्त्या तदुपपन्नमपि। स्वानुपयोगिनी परानुग्रहार्था च या पारमेश्वरी विद्यावृत्तिः तदपेक्षिकानध्यस्तविवर्त एव परं ब्रह्म।

किंवा ज्ञानिभिर्यत् प्राप्यते न तदवतारकार्योपयोगि। अथवा अभक्तज्ञानिनो न जीवन्मुक्तौ श्रीकृष्णप्रतीतिः। अत एव प्रेमाक्तैरनुभूयत इति मूलगतं वचनं विराजते। एतेन नित्यसाकार-मुक्तसाकारबोधकश्रुते-रुपबृंहणमपि सिध्यति।

ननु अभेदेऽपि भेदप्रत्यायको धर्मो हि विशेषकः। यथा 'इयं सत्ता' इति सत्ताभेदप्रत्यायकः। तथा तव मते अद्वितीये ब्रह्मणि अभेदप्रत्यायकधर्मः भेदप्रत्यायकधर्मश्च इति च धर्मद्वयेन भाव्यम्। तेन च अचिन्त्यभेदाभेदाङ्गीकारेण चैतन्यमतप्रवेशप्रसङ्ग इति चेत्।

न। मूढदृष्ट्या अचिन्त्यभेदाभेदवादे मधुराद्वैतवेदान्ते च किमपि वैलक्षण्यं न प्रतीयेत परं द्वयोर्भेदरहस्यं त्वद्दत्ते दृष्टान्ते एव लभ्यते। तथाहि अभेदसत्तायामपि सत्तेति भेदप्रत्ययः वाक्योपाधिवशादेव न तत्त्वतः। तात्त्विकधर्मश्चेत् शाश्वतो भवेत् वाक्यसमाप्तौ समाप्तिं न यायात्। परन्तु सत्ताया भेदप्रत्ययः वाक्यलयेनैव लयमाप्नुते।

अभेदसत्तायां विशेषभानम् उपाधिं विना सर्वथा नैव शक्यते। अतो भेदप्रत्यायको धर्मो वाचारम्भणमात्रम्।

तथाऽस्माकं मतेऽपि प्रतिबिम्बापेक्षिक-बिम्बत्वारोपावच्छेदेन बिम्बभूतस्य ईश्वरस्य अनध्यस्तविवर्तता।







अभेदे भेदप्रत्ययस्तेन च ब्रह्मप्रतीतिरिति चैतन्यमतमस्माकं न संमतम्। वयन्तु सगुणं निर्गुणञ्च विषमसत्ताकं मन्महे। अतो न चैतन्यमतप्रवेशोऽस्माकम्।

अपिच अस्माकं मते सगुणस्य विवर्तत्वेऽपि न अध्यस्तत्वम् इयानस्माकं शाङ्करमताद् भेदश्च।

एवमुपर्युक्तेनोपबृंहणेन निरूपणं कृतम्।

अपि च -

**आत्मा तु राधिका तस्य तयैव रमणादसौ।**
**आत्मारामतया प्राज्ञैः प्रोच्यते गूढवेदिभिः।।22।।**

**कामास्तु वाञ्छितास्तस्य गावो गोपाश्च गोपिकाः।**
**नित्याः सर्वे विहाराद्या आप्तकामस्ततस्त्वयम्।।23।।**

इति स्कन्दपुराणे वैष्णवखण्डगत-माहात्म्यवर्णनादवगम्यते। अनयोः श्लोकयोरिदमेव तात्पर्यं यत् नित्यसाकार-मुक्तसाकारभेदेन कथितम् एकं शाश्वतञ्चेति। अर्थात्-अद्वितीये ब्रह्मणि यथा सत्यसंकल्पादिकं बद्धजीवापेक्षया नित्यं तथा श्रीकृष्णः, तस्य गोपिका, गावः, विहारः इत्यादिसर्वं नित्यमेवेति पूर्वोदाहृतश्रुतेः प्रस्तुतश्लोक-द्वयस्य च भावः।

**रहस्यं त्विदमेतस्य प्रकृतेः परमुच्यते।**
**प्रकृत्या खेलतस्तस्य लीलाऽन्यैरनुभूयते।।24।।**

इति स्कन्दपुराणवचनम्। (वै.भा.मा.अ 1) अस्यायमर्थः -

इदम् = अधुना निरूपितम्। एतस्य = श्रीकृष्णस्य, व्रजभूमेर्वा। रहस्यम्। प्रकृतेः परम्। परं ब्रह्मैव रहस्यमिति वादं व्यावर्तयितुं मूले 'इदम्' इति पदम्। इदमा प्रकृतप्रकरणगतं परामृश्यते। प्रकृतप्रकरणञ्च परब्रह्मपरं नास्तीति द्योतयितुं श्लोके 'एतस्य' इति पदम्। पूर्वश्लोके श्रीकृष्णस्य अनध्यस्तविवर्तत्वं विशदीकृतम्।

आधाराधेयभावस्य वस्तुतोऽभावेऽपि पञ्चपादिकाकारोक्तमनुसृत्य पृथगिवभानमात्रम् अङ्गिक्रियते। नात्र कोऽपि विरोधः। वस्तुतस्तु

आधारधेयभावः अभेद एव। एतच्च ब्रह्मणोऽहम् आधार इति भगवद्वचनतोऽवगम्यते।

**ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च।**
**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च।।**

इति गीतोक्तिः (14-27)।

अहं ब्रह्मणो हि प्रतिष्ठा=आश्रय इत्यर्थः भाष्ये आनन्दगिरि-टीकायाञ्च विवृतः। ब्रह्मैव मम आधार इत्यर्थश्च श्रीधरस्वामिभाष्ये परमार्थप्रपाटीकायाञ्च दृश्यते। यथा प्रकाशस्य घनीभूतप्रतिमा सूर्यस्तथा अहं ब्रह्मणो घनीभूतप्रतिमेति भावस्तत्र दर्शितः। परमेश्वरस्य ब्रह्मणश्चाभेदकारणेन नैतेषां वचसां विरोधः। एवञ्च न गीतोक्तेः स्कन्दपुराणवचनानाञ्च विरोध इति बोद्धव्यम्।

**शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः।।**

इत्यादिकं प्रेमाभेदमेव दर्शयति। अतः प्रकृतप्रकरणनिर्देशः श्रीकृष्णं प्रत्येवेति तात्पर्यम्। 'प्रकृतेःपरम्' इति वचनेन च राधा, गोपिकाः, गावः, विहारश्च इत्येतत् सर्वं मायाकार्यं नास्तीति द्योत्यते। परमेश्वरस्य प्रकृत्यात्मकलीला सर्वानुभवसिद्धा।

**लीलैव द्विविधा तस्य वास्तवी व्यावहारिकी।**
**वास्तवी तत् स्वसंवेद्या जीवानां व्यावहारिकी।।**

**आद्यां विना द्वितीया न द्वितीया नाद्यगा क्वचित्।**
**आवयोर्गोचरेयं तु तल्लीला व्यावहारिकी।।**

इति स्कन्दपुराणे भागवतमाहात्म्ये (अ-1)। तत्र वास्तवी तु स्वसंवेद्या अर्थात् श्रीकृष्णस्य भक्तानाञ्च कृते गम्या। व्यावहारिकलीला तावत् अस्माकं गोचरेति शाण्डिल्यमहर्षिः।

लीला नाम प्रयोजनमन्तरा प्रवृत्ता क्रीडा। अत्र 'लोकवत्तु लीलाकैवल्यम्'' इति ब्रह्मसूत्रं प्रमाणम्। सर्वज्ञतायाः आप्तकामतायाः सत्त्वे इतरेषां कार्यार्थं प्रवृत्ता लीला नोन्मत्तचेष्टायते।







'आद्यां विना द्वितीया न' इत्यत्र ''सत्यसंकल्पादिगुणवान् परमात्मा इत्यतः स जडप्रकृतिमपि प्रवर्तयितुं शक्नोति। शुद्धब्रह्म न तथा। उदासीनत्वात् तस्य न प्रकृतिप्रवर्तकत्वम्। सगुणस्य तु अनध्यस्त-विवर्तत्वात् भक्तोद्धारः सृष्टिकार्यञ्च तस्य सिध्यति।'' इत्यर्थः।। द्वितीया या व्यावहारिकी लीला न साऽद्यलीलाप्रविष्टा। अर्थात् उत्पत्तिस्थिति-लयादिकं यद् गुणानुसारं मूर्तित्रयस्य कार्यं तत् वास्तवलीलां न स्पृशति। इयमेव द्वितीयाऽध्यस्तविवर्तरूपा। आद्या तु अनध्यस्तविवर्तरूपेति भावः। द्वितीयाया अपि विवर्तत्वेन लीलेति व्यपदेशः।

एवं मुक्तौ भक्तिरेव सेवाफलम्। अत्र श्रुति-स्मृति-पुराणप्रमाणं भूरिशो दर्शयितुं शक्यम्। अथवा वागविषयायां विदेहमुक्तावपि अवतारसहायादिकं सेवाफलम्।

मुक्तानां सगुणेशभावापत्तावपि भक्तैःसह रघुनाथाद्यवतारा भवन्ति। अत्र ''विष्णो पुत्रत्वमागच्छ कृत्वात्मानं चतुर्विधम् ''इति बालकाण्डे वाल्मीकिवचनं प्रमाणम्। देवानामिदं वचः श्रुत्वा श्रीमन्नारायणः -

**मानुष्ये चिन्तयामास जन्मभूमिमथात्मनः।**
**ततः पद्मपलाशाक्षः कृत्वात्मानं चतुर्विधम्।।**

इति स्वात्मानं मनुष्ययोनौ चतुर्धाऽवतारयामास। अस्य संमतिः विष्णुपुराणे, अग्निपुराणे, भागवतेऽपि दृश्यते।

पद्मपुराणे यथा -

**मध्याह्नसमये लग्ने सर्वग्रहशुभान्विते।**
**कौसल्या जनयामास पुत्रं लोकेश्वरं हरिम्।।92।।**

**कैकेय्यां भरतो जज्ञे पाञ्चजन्यांशसंभवः।**
**सुमित्रा जनयामास लक्ष्मणं शुभलक्षणम्।।93।।**

**शत्रुघ्नञ्च महाभागा देवशत्रुप्रतापनम्।**
**अनन्तांशेन संभूतो लक्ष्मणः परवीरहा।।94।।**

**सुदर्शनात् शत्रुघ्नः संजज्ञेऽमितविक्रमः।**
**ते सर्वे ववृधुस्तत्र वैवस्वतमनोः कुले।।95।।**

इति पदम्पुराणे उत्तरखण्डे। अध्यात्मरामायणेऽपि कथितमिति।

अत्रात्मानमित्युक्त्या शङ्खचक्रकानन्तानामपि भगवद्रूपता सूचिता। इति श्रीमद्रामायणस्य तिलकव्याख्या एतदेव उपोद्बलयति। अनन्तादिकाः भक्ताः। त एव भगवन्त इति वाक्यस्यास्य रहस्यम्। मुक्तौ सगुणेशभावापत्त्या अवतारा भवन्तीति। तत्र श्रीपतिस्तु अनध्यस्तविवर्तः मुक्तसहायकश्च। अतो न पुनर्जन्मलीलामात्रमेव। सर्वाऽपि लीलाऽनध्यस्तविवर्तरूपा।

तस्या धर्मार्थत्वस्वीकारे भगवन्नित्यमुक्तताभङ्गः। इदमेव तत्त्वतः सिद्धान्तलेशे अप्पय्यदीक्षितैर्दर्शितम्।

अतः अनन्तादयः मुक्तावेकीभूयाऽपि अवतारसमये सहायकभक्ता भूत्वा क्रीडन्तीति भावः।

यथा भावार्थरामायणे अवतासमये मुक्ता भगवत्सहायका भूत्वा विलसन्तीति कथितम्। अत्र सर्वेषां पुराणानां समन्वयो भवति।

'वासुदेवकलानन्त' इति, 'अंशेनावतीर्ण' इति, 'कृष्णस्तु भगवान् स्वयम्' इति श्रीमद्भागवते प्रमाणानि विद्यन्ते। तत्र अंशशब्देन मुक्तावतारसहायको बलरामः पूर्णशब्देन अनध्यस्तविवर्तो हि श्रीकृष्णो ग्राह्यः। एवंविधज्ञानेन सगुणसाक्षात्कारो भवति।

ध्यानेऽपि श्रीकृष्णस्तु अविकारी। श्रीभागवतानुसारञ्च श्रीकृष्णस्य ध्यानं ज्ञानञ्चोभयं समानम्। सर्वोपपत्तिभिरवलोकिते सेवाफलमिति सेवैव।

विदेहमुक्तेः वाग्विषयत्वस्वीकारेऽपि भक्तिर्विलसत्येव तत्र। जीवन्मुक्तौ तु भक्तिं विना न परमानन्दप्राप्तिः।

अथ प्रारब्धावसाने ज्ञाने जाते श्रवणाद्यभ्यासः करणीय इति यत् संक्षेपशारीरके कथितं तत्र प्रष्टव्यं यत् स ब्रह्माभ्यासः अन्वयतो व्यतिरेकतो वा? व्यतिरेकेण चेत् समाधिरेव। परं व्युत्थाने च





कैवल्यलाभो भवतु इति अन्वयब्रह्मभावना श्रेयसी। भगवति सर्वभूत समर्पणं च श्रेयः।

संपातपर्यन्तं ज्ञानस्यानुदये सगुण-निर्गुणयोरन्यतरस्य ध्यानस्य कर्तव्यत्वे भगवद्गीताद्वादशाध्यायोक्तरीत्या सगुणध्यानमेव वरम्। अथ मरणसमये श्रवणाद्यभ्यासेनैव ज्ञानमुदेतीति चेदुच्यते तर्हि स ज्ञानोदयः अपरोक्षज्ञानतीव्रतया भवति उत अपूर्वपुण्यफलेन इति प्रथमं वक्तव्यम्।

मरणपर्यन्तमपरोक्षज्ञानानुदये तु प्रथमः पक्षो न समीचीनः। द्वितीयपक्षे च श्रवणाद्यभ्यासजनितस्य पुण्यफलस्यापेक्षयाऽपि भगवत्प्रसादजन्यमपूर्वं बलीय इति नः मतम्।

वासुदेवे भगवति दृढं प्रयोजिता भक्तिः आशु जनयति ज्ञानं वैराग्यञ्च। अतः आमरणान्तं भक्तिरेव सर्वज्ञमते अङ्गीकार्या।

**एवं ज्ञानोत्तरञ्चापि देहो भवतु वा न वा।**
**भक्तिस्तु सदृशी तत्र सर्वदा भवतु स्थिरा।।135।।**
**एवं विदेहकैवल्ये मुक्तेशसमसंस्थितिः।**
**भवतीति वचः शास्त्रे सर्वथाऽवितथं प्रियम्।।136।।**

**इति मधुराद्वैताचार्य - सद्गुरु श्री-गुलाबराव महाराजस्य कृतौ प्रेमनिकुञ्जे सेवाफलनिर्णयो नाम पञ्चमी वल्ली।**
**इति मधुराद्वैतसिद्धौ पञ्चमं प्रकरणम्।**

**मधुराद्वैतवेदान्तसिद्धान्तपारदृश्वनाम्।**
**श्रीगुलाबगुरूणां हि वचः पीयूषमद्भुतम्।।137।।**
**श्रीमन्नारायणं देवं ज्ञानेशं भक्तवल्लभम्।**
**समाश्रित्य कृतं ग्रन्थमाद्रियन्तां सतां वराः।।138।।**

**इति मधुराद्वैतसंप्रदाये गौतमगोत्रजेन**
**श्रीयेल्लामधुसूदनेन कृता मधुराद्वैतसिद्धिः समाप्ता।।**

★★★★